S[illegible] [illegible] [illegible]isnat Series No. 14.

# NALADAMAYANTĪYAM

( DRAMA )



By

KĀLIPADA TARKĀCHARYA

ADHYAPAKA, SANSKRIT SAHITYA PARISHAT.



Published by

[illegible]E SANSKRIT SAHITYA PARISHAT,

*Shyambazar, Calcutta.*



Price { *for members* 1/-
*for others* 1/4




संस्कृतसाहित्यपरिषद्ग्रन्थमालायां १४श-संख्या

# नलदमयन्तीयम्

## नाटकम्

संस्कृतसाहित्यपरिषदाचार्य्य-
श्रीकालीपदतर्काचार्य्यविरचितम्




कलिकाता

संस्कृतसाहित्यपरिषद्भवनात् प्रकाशितम्

(मू)ल्यं सपादरूप्यकम् सभ्यानां रूप्यकमात्रम्

# FOREWORD.

The story of Nala and Damayanti is too well-known to require an introduction. It is presented n the present work in a dramatised form. It was published in the Sanskrit Sahitya Parishat Patrika, piece by piece, during the last two years. The composition of the drama is so exquisite that we cannot esist the temptation of bringing it out in the form f a separate book, so that the reading public may ave a taste of it. The aim of the Parishat is not to publish unpublished and rare works only, but also to ncourage new authors by bringing out their works. Pandit Kalipada Tarkacharyya, the author of the resent work, has already established his fame as an ble writer in Sanskrit by publishing, among various ther things, a good many Sanskrit poems and an one-ct drama—the Syamantoddhara—which appeared in e journal of the Parishat, and this book is sure to ld to that.

S. S. PARISHAT,
th. March 1926.

PASHUPATI NATH SHASTRI
GISPATI ROY CHOUDHURI
*Hony. Secretaries.*

# निवेदनम्

अयि भो नवरसप्रियाः श्रीमन्तः सहृदयाः ! सुविदितमेवेदं भवतां यथा नलदमयन्तीयं नाम किमपि नवीनं नाटकं संस्कृत-साहित्यपरिषत्पत्रिकायां यथाक्रमं प्रकाशितमास्ते । तदेवाद्य दिष्ट्या सुविश्रुतसंस्कृतसाहित्यपरिषदनुगृहीतं पृथक्तया ग्रन्थरूपेण परिणतं सभयं भवत्समीपमुपतिष्ठते । सत्सु परःसहस्रेषु प्राचीनेषु दृश्यकाव्येषु नवीननाट्यनिर्म्मातुरयमुद्यमो यद्यपि सुतरामुपहासायैव परिकल्प्येत, तथापि सुहृदां केषाञ्चन सस्नेहप्रेरणामुपेक्षितुमसमर्थ एवात्र कृत्ये प्रावर्त्तिषि ।

यथावसरमिदमस्माभिरावेद्यमेव यथा—अस्ति पुरा मूलाजोड़-संस्कृतमहाविद्यालये कदाचित् सारस्वतमहोत्सवसम्भावनाय तत्रत्य-विद्यार्थिसमाजैरभिनीतं मयैव निर्म्मितं विदर्भसमागमं नाम नाटकं किमपि । तदानीमेषोऽहम् अत्रपादकल्पानां स्वर्गत-महामहो-पाध्याय-शिवचन्द्रसार्व्वभौमपादानां पदोपान्ते न्यायविद्याधि-गमसौभाग्यमनुभवन्नासम् । स हि प्रथमः समुद्यमो मे संस्कृतमय-नाट्यवस्तुनिर्म्माणे सफलतां नीतः सुप्रयोगेण सतीर्थादिभिरिति तेषु निरवधिः कृतवेदिता मामावर्जयति । परतश्च बह्वोः कालादनन्तरं यदा परिसमाप्तविद्यो विश्रुतसंस्कृतसाहित्यपरिषद्विद्यालये न्याय-साहित्यादि-शास्त्राध्यापनायां प्रावर्त्तिषि, तदा तस्य नाटकस्य कल्पनायाञ्च रचनायाञ्च बालजनोचितशैलीमभिवीक्ष्य विचार्य्य च बहुत्रैव वङ्गभाषामय-दृश्यकाव्यानुकृतिं मूलतो यावदन्तं निःशेषं परिवर्त्य कल्पनाञ्च रचनाञ्च नवीनमिदं नाटकं समपादि नल-दमयन्तीयं नाम । तदेवमिदानीमनेन वस्तुना विपश्चितां यदि सन्तोषलेशः, तदा स एव बीजं मे भूरितरप्रयाससाफल्येष्विति ।

१३३२ वङ्गाब्दीय—
चैत्रसंक्रान्त्याम्

आश्रवस्य
ग्रन्थकर्त्तुः

# नलदमयन्तीयम्

## नाटकम्

नान्द्यन्ते प्रविशति सूत्रधारः

कालिन्दीकलगानसङ्गतवियत्सञ्चारिवेणुस्वरो
राधाकुञ्जलतान्तसौरभहरः श्यामप्रभासुन्दरः ।
नन्दानन्दकरक्रियासहचरो गोपीहृदां तस्करो
गोविन्दो वितनोतु वः शिवपदं शृङ्गारदेवो हरिः ॥

अपि च

भक्तानामभयाय यस्य महिमा दुःखाय कोपाङ्कुरः
पापेभ्यश्च यदर्चनासु विरतिः पुण्याय यन्मानना ।
यः सृष्टौ चतुराननः स्थितिकृते विष्णुः शिवः संहृतौ
सोऽयं वो विदधातु वाञ्छितफलं सर्वार्थकल्पद्रुमः ॥

अपि च

कालं कञ्चन गोकुले व्रजवधूसङ्गादनङ्गीभव-
न्नक्रूरेण जगाम यो हि मधुरां निक्षिप्य शोकेऽखिलान् ।
विस्मृत्येव चिराय गोपजनतामुत्सारयामास यः,
सोऽयं वो वितनोतु वाञ्छितवरं शृङ्गाररङ्गी चिरम् ॥

( निष्क्रान्तः )

ततः प्रविशति प्रमोदं नाटयन् स्थापकः

स्थापकः—अलमतिप्रसङ्गेन, नूनमिदमस्माकं प्रमोदस्थानं सामाजिकचित्तमनुवर्त्तयतां, यदस्मत्सतीर्थगीतेन श्रोत्रामृतेन नान्दीसङ्कीर्तेन चित्रार्पितारम्भ इव सर्वतो भाति रङ्गः ; तथा हि—

दृष्टिर्निश्चलतां दधाति नितरां योगे यथा योगिनाम्,
दिव्यानन्दविलोपशङ्कित इव स्थैर्यं गतो विग्रहः ।

दूरे प्रस्थितमन्तरेण सहसा कस्यैचिदासत्तये,
गीतानुस्वनतो न गीतविरतिं सामाजिका जानते ॥

अथवा किमत्र चित्रं यत् सुधाकरः सुधाकिरणसम्पातेन शरीरं नेत्रं मानसञ्च सुमनसां सन्तर्पयतीति। तथाहि—एतत्सङ्गीतपरिचयं लब्धवतो ममापि—

यावद्दूरं मूर्च्छनायाः प्रचारस्तावद्दूरं मानसं सम्प्रवृत्तम्।
भावावेशाद् विस्मृतं सर्वमेतद् गीतं लोके सर्वसौभाग्यसीमा ॥

तन्मन्ये शुभोदर्कोऽयं समारम्भो भविष्यतीति, कुतः—

आदौ जलधरमाला विलसति तदनन्तरं वृष्टिः।
कुसुमविकाशादूर्द्धं भवति फलानां समुद्भेदः ॥

( विस्मृतिं नाटयन् ) अथ कोदृशस्तावदद्यतनः प्रकृतसमारम्भः ? ( स्मृतिमभिनीय ) आं स्मृतमिदानीं,—

अद्य खलु वासन्तमहोत्सवे सम्मिलितानां रसभावविदां सामाजिकानां बहुमानाय मधुसूदनसरस्वतीजन्मपूत-पुरन्दरवंशाङ्कुरेण तर्काचार्य्यपदलाञ्छनेन श्रीहरिदासतर्कतीर्थात्मजेन कविना समर्पितमस्मासु "नलदमयन्तीयम्" नाम नाटकं यथारसमभिनेतुम्।

शैशवात् प्रभृति काव्यसमृद्धयां यो गतः सुमनसामनुरागम्।
पादपो विपुलविग्रहलम्भो सूच्यते प्रथमतः किल पत्रैः ॥

अपि च यत्र

तर्के सुविषमतत्त्वे प्रतिभा प्रथिता यथाकालम्।
नानादर्शनविद्यामाम्नापयति प्रभोस्तुल्या ॥

अपि च सूक्तमिदं कवेरस्यैव यथा

कालानुरूपरचनाप्रचितं यदि स्यात्
काव्यं तदा कवयितुः कविता चकास्ति।
वीरस्य भूषणमरातिवधे कृपाणं,
शृङ्गाररङ्गसमये तदयोग्यमेव ॥

तद् यावदनेन कालानुरूपप्रसादरचनाललितेन नवीनरूपकेण सामाजिकानाराधयितुं पारिपार्श्विकमामन्त्रयामि। (नेपथ्याभिमुखमालोक्य) अये! अयाचितादेव जलधरात् प्रस्रवतीयं जलधारा, यदनामन्त्रित एव स्वयं पारिपार्श्विकः प्राप्तः। अये! किमयं सचिन्त इवोपलक्ष्यते? भवतु पश्यामि। (तदभिमुखं स्थितः)।

(प्रविश्य सचिन्तः पारिपार्श्विकः)

पारि—भाव, अभिवादये।

स्थापकः—मारिष, सचिन्त इव लक्ष्यसे, तत् किन्नु खल्विदं? कच्चित् नातिमात्रचिन्ताकारणं किञ्चित्?

पारि—भाव, महदिदं चिन्ताकारणमुपगतम्।

स्थापकः—कथमिव?

पारि—भाव, श्रूयताम्,—योऽसौ देवव्रतस्य पुत्रो दानव्रतो नाम बहुलप्रयत्नेन दमयन्तीभूमिकामध्यापितः, स खलु साम्प्रतं परीक्षावाञ्छया मया पृष्टो मत्त इव सर्वं विशृङ्खलमेव कथयति। अथ तस्य कारणमन्विच्छता मया तदीयप्रियसुहृदो विश्वावसोर्मुखात् श्रुतं, यथा कदाचिदसौ दानव्रतो वसुमित्रस्य भवनं कार्यव्यपदेशेन गत्वा यदैव तदात्मजां वसुमतीं चित्रे दृष्टवान्, ततः प्रभृत्येव तस्य मानसविकारो जात इति। तदद्य दमयन्तीभूमिकाभिनयस्य कीदृशी गतिः कर्त्तव्या?

स्थापक—अहो दैवम्!

तटिनी विपुलतरङ्गा तरणी लग्ना तटोपान्ते।
तरितुं वाञ्छति पान्थे मरुता सहसा विभग्नासौ॥

(विचिन्त्य) अथवा मारिष, अलं चिन्तया, अयमहं सर्वासु भूमिकासु सुगृहीतपरिचयस्तदधिकामनुतिष्ठेयम्। अद्य मारिष, दानव्रतो नाम नाट्ये सुतरामनुरागवान् आसीत्, सोऽपि तादृशीमवस्थां नीतः कन्दर्पेण? अथवा नास्ति किञ्चिदसाध्यं कामदेवस्य, तथाहि—

कामान्महेन्द्रो गुरुदारगामी, पद्मासनो दीव्यति देहजायाम् ।
प्रज्ञा च लज्जा च मनोबलञ्च प्रलीयते सर्व्वमिदं स्मरेण ॥

(नेपथ्ये) साधु शैलूषपुत्र साधु, सम्यगुक्तवानसि, "प्रलीयते सर्व्वमिदं स्मरेण" इति ।

पारि—भाव, क एष नेपथ्यस्थानगतो भवद्वचनमनुहरति ?

स्थापकः—मारिष, प्रियं नः प्रियम्, एष तावदस्मत्सतीर्थों मित्रगुप्तो विदूषकभूमिकामधितिष्ठन् इत एवाभिवर्त्तते, तदेहि आवापिस्वनियोगमनुतिष्ठावः । (निष्क्रान्तौ)

प्रस्तावना

---

(प्रविश्य विदूषकः)

विदू—साधु शैलूषपुत्र साधु, सम्यगुक्तवानसि, "प्रलीयते सर्व्वमिदं स्मरेण" इति । अन्यथा य एव मे प्रियवयस्यः पुरा कौमारसुलभलज्जापिशलो रमणीनां नामापि नैव स्मृतवान्, सोऽयमिदानीं रमणीजनवियोगदुर्भरमात्मानं मन्यमानः कथं शोचनीयां दशामनुप्राप्नुयात्, नायं सम्प्रति प्रियेषु रमते, नापि राजकार्य्येषु मनो दधाति, केवलं शून्यान्तःकरण इव शून्यमुदीक्षमाणो दीर्घं दीर्घं निश्वसिति, अन्तरान्तरा च तद्गतेन चेतसा परिचिन्तयतो गण्डाभोगे मुक्तास्थूला अश्रुबिन्दवः प्रवहन्ति । अहो विचित्रशक्तिमानितोऽपि मे प्रियवयस्यः, येन तथाभूतं बाष्परयप्रवर्त्तकमपि वेदनासम्भारमन्तर्निरुध्य एतावतो दिवसान् राज्यकार्य्याणि सम्पादितवान्, अद्य तु कामेन सुदुःसहामवस्थां नीतः प्रकाशमानं भावं रक्षितुकामः पुरोपकण्ठोपवनविहारव्याजमाश्रित्य इह मिलितः । (विभाव्य) अथ कीदृशीयं विदर्भनन्दिनी, यां ललितलावण्यां चित्रगतामीक्षमाणः सुतरामधीरतां यातो मे प्रियवयस्यः ? यादृशी चित्रगतासौ परिदृश्यते, यदि सा तथैव, तदा समुचित

एव तादृशो मानसनिर्बन्धो वयस्यस्य ; किन्तु तत्रैव भूयान् संशयः समुदेति, अपि सम्भवति मानुषे लोके तथाभूता कमनीयलावण्यसम्पत् ? यच्च विदर्भप्रत्यागता वन्दिनः कामिनीगुणकथनावसरे तथैव तामुद्घोषयन्ति ; तच विदर्भप्रदत्ता उत्कोचविशेषा एव प्रभवेयुः। भवतु यथा तथा वा, दमयन्ती नारीकुलेषु परमामेव प्रशस्तिमुपगच्छति इत्यत्र नास्ति सन्देहः। भवतु साम्प्रतं वनपालमाहूय वयस्यस्य निर्वृतियोग्यं प्रदेशं निरूपयामि। (परिक्रम्य) अये ! एष वनपालो ललितरूपया वनपालिकया सनृत्यसङ्गीतमनुतिष्ठन् इत एवाभिवर्त्तते, भवतु एतयोर्विस्रम्भपरिपालनाय पादपान्तरालमाश्रयामि।

(पादपान्तरालमाश्रयन् स्थितः)।

(ततः प्रविशति वनपालिकया सह सनृत्यसङ्गीतम्
अनुतिष्ठन् वनपालः)

वनपालः— मार्जय लघु पर्णराशिगहनकाननम्,

(चल) काननमनु कुसुमं चिनु सुतनु ! मोहनम् !

वनपालिका—

सलिलसेकमनुधारय रेणुविरहमनुपालय
परिचर नवलतिकाकुलमनोहरणम्।

वनपालः—(सस्वरं) सिञ्चति तव चरणकमलदास एष नीरम्

वनपालिका—(सस्वरं) धिक् प्रहसनमाशु वचनमुपसंहर धीरम्

(कोपं नाटयति)

वनपालः— कुरु कुरु सति कृपया मयि सरललोचनम्

उभौ—(चल) काननमनु कुसुमं चिनु सुजनमोहनम्।

विदू—अहो रागपरिवाहिणी सङ्गीतपद्धतिः !

वनपालः—अले पुत्तप्पसविणि, अवि ओधालेसि, अज्ज इध महालाओ आअदोत्ति ?

वनपालिका—अज्जउत्त ण क्खु, ओधालेमि, ता कधं विअ ?

वनपालः—सुणु, जइ ण ओधालेसि, अज्ज वीण वि कालणीन विअलिदहिअओ महालाओ वअस्सवम्मणेण अत्तणकेलएहिं पलिअणेहिं अ अणुगदो काणणं एदं पलिप्पत्तो, ता णिच्चकादव्वं कलिअ अहिअं वि सक्कालं काणणस्स कलेह्म ।

वनपालिका—अध अज्जउत्त, महालाअस्स वि दुक्खं वट्टदि ? जेण सो वि विअलिदहिअओ होदि ?

वनपालः—कुड़ुम्बिणि, किं णु क्खु, एदं ण जाणेसि, जधा जस्स जाव सुहं, तस्स दाव दुक्खं, जधा णाम महालाओ अहिअं सुहं अणुहोदि, तधा ज्जेव कालणविसेसेण दुक्खं वि अहिअं ज्जेव ।

वनपालिका—एव्वं से दं ?

वनपालः—अधइं ।

विदू—अहो निपुणवेदिता वनपालस्य !

वनपालिका—अध एव्वं ट्ठिदे, किं णु क्खु, माणुसो लाअसुहं अहिकामेदि ?

वनपालः—तं क्खु सुहमित्तविस्साणेण मोहादो ज्जेव ।

वनपालिका—अध अह्माणं लाआ किं अदो ज्जेव क्कालणादो लाअघलअं पलिहलिअ काणेणुहेसं पपट्ठिदो ?

वनपालः—को वा भणउ ? सुदुग्गमा क्खु लाअचित्तवित्ती, कधं अह्मेहिं अणुहोदव्वा ? ता चिट्ठदु एदं जाव दाणिं अत्तणकेर-आइं कज्जाइं सम्पादेह्म । (वनभूमिं संस्कुरुतः)

वनपालिका—णाह, अज्ज क्खु उज्जाणेसुं पविसन्तो लाअपुलिसा लुक्खआणं सह्हन्तं विआरं उप्पादअन्तो ण मे लेअन्ति ।

वनपालः—कधं विअ ?

वनपालिका—किं ण क्खु पेक्खदि णाहो, एसो वसन्तावदार-लमणिज्जे वि समए अवणीदपुप्फकिसलओ लुक्खसमूहो भूसणरूसो विअ लाआ अहिअं ण सोहदि, लुक्खतलेसुं खण्डिदा पुप्फकिसलआ

सूलकिलणमिलाणा अहिग्रं मानसदुक्खं उवजणअन्तो राअन्ति।

वनपालः—कुडु,म्बिणि, किं एत्थ दुक्खं, लाअपुलिसाणं किदे ज्जेव संवडिढदा अह्मेहिं रुक्खआ, ता जइ लाअपुलिसा ज्जेव तधा अणुचिट्ठन्ति, णं कइत्था वा,खु एदे।

वनपालिका—तह वि पुत्तआणं सलोलक्खोहो विअ लुक्खआणं पुप,फकिसलअव,भंसो मं दुक्खावेदि।

विदू—युज्यते, वनपालिकायाः पुत्रकेष्विव वृक्षकेषु स्नेह एवम् अनुभावयति।

वनपालः—अले जहा तहा होदु, एहि रुक्खएसुं जलं सिञ्चेह्म।

वनपालिका—जहा आणवेदि अज्जउत्तो! (इत्युभौ परिक्रामतः)

विदू—(दृष्ट्वा) अये एष वनपालो वनपालिकया पादपालबालेषु सलिलसेकाय इत एवाभिवर्त्तते, तत् कथमिदानीं आत्मपक्षः परिरक्ष्यताम्? अथवा, किमात्मपक्षपरिरक्षणचिन्तया, अहं खलु प्रबलपराक्रमस्य निषधराजस्य वयस्यो, यदेव मया प्रस्तोतव्यं, तदेवात्मपक्षपरिरक्षणक्षमं भवेत्, तदलमन्यथा शङ्कया, अथवा यदि नासिकागर्जनेन निद्रां नाटयेयं, तदैव स्वपक्षो रक्षितः स्यात्, तदेवमेव करिष्ये, यावदेतौ मां गभीरनिद्रासूढं मन्येयाताम्

(नासिकागर्जनेन निद्रां नाटयति)

वनपालिका—(सभयं) अज्जउत्त, कुदो णु क्खु, एसो सूअलघोणासद्दो प्पसलदि, णत्थि एत्थ पुला को वि सूअलो दिट्ठो, ता किं णु क्खु एदं?

वनपालः—एसो संभमो मं वि पज्जाउलं कलेदि, ता तुमं इध चिट्ठ जाव अहं पेक्खामि।

वनपालिका—मा क्खु! मा क्खु, सूअलो णाम पइदिपलुसा जादो, ता अलं तस्स समीवप्पट्ठाणेण, एहि उइअं गच्छेह्म।

वनपाल:—भीलु, अलं आसङ्काए, अधवा आअच्छ तुमं वि रुक्ख ओ ष, जाव सव्वं देक्खिस्ससि।

वनपालिका—एव्वं भोदु। (इत्युभौ विदूषकमभिसरत:)

वनपाल:—अले ण क्खु एसो सूअली, एसो को वि माणुसो पाद-वस्स तलट्ठाने णिद्दासुहं अणुहोदि,

वनपालिका—णं को णाम एसो भवे? अधवा अम्ह साअ-पलिजणो त्ति णत्थि एत्थ सन्देहो।

वनपाल:—अध पेक्खिअ किदणिच्चओ होमि।

(इति निपुणं वीक्षते)

विदू—(लब्धसंज्ञ इव) अरे को नाम एष महाराजनलस्य प्रियवयस्यं नानाविधभूषणप्रसाधितविग्रहं मामशब्दपदसञ्चारेण चोरयितु-मिच्छति? तिष्ठ रे जाल्म तिष्ठ (इत्युत्थाय वनपालं सासूयमिव पश्यन्) किन्नु खलु? त्वमेवंविध: सञ्जातोऽसि? धिक् शान्तम्।

(मुखं परावर्त्तयति)

उभौ—पसीददु पसीददु अज्जो, ण क्खु अम्हे ईदिसस्स अकज्जस्स कालके। णिद्दं गदस्स अज्जस्स णासिआगज्जणं सुणिअ भीदेहिं अम्हेहिं णिच्चअं कादं एव्वं अणुचिट्ठिदं म्हि।

विदू—अत्र क: प्रत्यय:?

वनपाल:—अज्ज! एत्थ मे प्पमाणं भअवदोओ वणदेवदाओ, मम-केरअं हिअअं अ। को अस्सो एत्थ प्पमाणं भवे?

विदू—साधु, सम्यक् प्रमाणयसे मन:सत्त्वं, तदिदानीं त्वां निरपराधं सम्भावयामि, शान्ता युवयोराकृतिरपि निरपराधतामिव स्वीयामनुभावयति।

वनपाल:—अज्ज, अणुग्गहीदा अम्हे, ता जाव दाणिं आणवेदु अज्जो णिअं कज्जं अणुचिट्ठिदुं, अज्ज वि सावसेसो णिअव्वावारो।

वनपालिका—अज्ज वन्दामि, आणवेदु अज्जो, जाव गच्छम्ह।

विदू—श्रूयतां, अपि विज्ञायते, यथा अद्य केनापि विकारेण विमनायितो महाराजः स्वं मानसं निर्वर्त्तयितुं विलासोद्यानमिदं परिभ्राम इति ?

उभौ—अज्ज, अधइं ।

विदू—तदत्र तथा कञ्चित् प्रदेशं स्वच्छन्दसञ्चारं अपनीतजीर्ण-तृणपत्रं निरूपय, यथास्य तत्र निषण्णस्य मलयवातमासेवमानस्य विकारोपशान्तिः सुलभा भवेत् ।

वनपालः—अज्ज किं त्ति बहुलणिरूवणेण, रमणिज्जाइं सव्वाइं पदाइं एत्थ विलासोज्जाणे, तधा हि पेक्खदु भवं, एदे पुप्फफल-भारणमिदसिहरा रुक्खआ सव्वस्सिं ठाणे सोहन्ति, तधा सव्वदो वट्टन्ति सुधाधवलवण्णा सिलापट्टआ, एसा अ माहवीलदा पुप्फसोहा-रमणिज्जा सोहग्गं ज्जेव संसूचेदि भोइजणाणं । ता एदं ज्जेव तधा सुहपदं भवे ।

विदू—अरे कुशलस्त्वं स्वेषु कृत्येषु, तदेतेन प्रचुरमेव राजप्रसाद-मर्हसि !

वनपालः—अज्ज, राअप्पसादो मए सुचिलं ज्जेव भअवदो प्पसादेण अणुभविज्जदि ।

विदू—इतोऽप्यधिकतरं लभस्वेति प्रार्थये ।

वन—अज्ज ! अणुग्गहीदा म्ह ।

विदू—अथ त्वं परिजनैः साकं चिरमत्रैव तिष्ठसि ?

वन—भअवं, अधइं ; जइ चिलं एत्थ ण चिट्ठेमि, तदो विलासो-ज्जाणं तिणेहिं परिकीण्णं जिण्णपत्तदुप्पवेसं सव्वधा अवट्ठाणे जोग्गत्तणं ज्जेव पलिच्चअदि साधालणाणं वि, का कधा लाअपदोव-जुत्ताणं भवादिसाणं ।

विदू—अथ अत्र किं वस्तु भुञ्जाना यूयं जीवनयात्रां निष्पादयथ ?

वनपालः—अज्ज, किं णु क्खु एव्वं भवं पुच्छदि ? अवि एदं

ण विसादं अज्जेण, जधा अह्म रसो णिच्चआ वणुद्देशं रक्खिदुं।

विदू—तेन किं स्यात्?

वनपालः—तेण क्खु राअकोसादो लद्धेहिं अत्थेहिं णिव्विग्घं जीवणं धारेह्म।

विदू—आः मूढ़! अत एव पृच्छामि, यदि तावदहमस्य विलास-काननस्य परिपालकपदमगमिष्यं तदा प्रतिवासरमेव तरुलताभ्यः प्रचुराणि फलानि सञ्चित्य दैवं कुक्षिगतं वैश्वानरं निर्वापयिष्यम्। को नाम सुखोपनतामीदृशीं सम्पदं हेलया परित्यज्य आयासेषु पदं कुर्य्यात्?

वनपालः—अज्ज, मा एव्वं भण, विलासोज्जाणं एदं लाअकेलअं, एत्थ उप्पस्साइं सव्वाइं ज्जेव द्व्वाइं लाआधिआलं अरिहन्ति, ता एत्थ उप्पस्साणं फलाणं कधं अह्मेहिं उवभोओ? मज्झुणो अण्णु-मदीए महोदेसुं भट्टुणो द्व्वेसुं चोलत्तणं उवगदं भवे, अदो ज्जेव अह्मे ईदिसकज्जस्स ण कालके।

विदू—(स्वगतं) अहो नीचजातेरपि वनपालस्य साधुता! दुर्लभ-स्तावदेवं विमलचारित्रो मानुषेषु, तदयं विजयते मम प्रियवयस्यस्य पवित्रो राज्याधिकारः। तथाहि अद्य तपोवनेषु निरुपद्रवाः सोम-पोथिनो यज्ञीयहविःसौरभैः प्रियं कुर्व्वन्ति देवतानां, कालवर्षी पर्जन्यः समावर्जयति वसुन्धरां शस्यस्तबकैः, सर्वा एव प्रजाः सुखमनुभवन्ति पुरन्दरपुरनिवासेनेव निषधनिवासेन, नूनमहं भाग्यवतामग्रेसरो महनीयप्रभावस्य महाराजनलस्य वयस्यपदवीमध्यासीनः। अहो कीदृशं मया समाचरितं जन्मान्तरे पुण्यकर्म्म, यस्य तथाभूतमनुत्तमं फलमिदं समनुभूयते! नूनं सौभाग्यवती मे प्रियतमा भानुमती, या हि मामीदृशं सकलवसुन्धराधीश्वरस्य प्रियवयस्यं पतिपदे समुपलभ्य स्पृहणीयतामाश्रितवती निखिलानां नारीजनानां। भवतु, अलमनया चिन्तया, यावदिदानीं प्रकृतसंवादेन भूयोऽपि वनपालं संवादयामि।

(प्रकाशं) अरे, कथितं मे हृदयेन, समुचितमेव ब्रवीषीति, तदाशिषं ते प्रयच्छामि, यथा एवं साधुभावं दधानः सुचिरं सपरिजनः सुखं स्थेया इति।

उभौ—अज्ज, अणुग्गहीदा अह्मे तुह एदिणा वअणेण।

विदू—तद् गच्छ, यावदिदानीमनुतिष्ठ स्वनियोगम्

उभौ—जं अज्जो आणवेदि, अज्ज वन्दामि (गन्तुमीहते)।

विदू—नहि नहि, तिष्ठ।

वनपालः—आणवेदु अज्जो।

विदू अस्मिन् कानने चिराय त्वमधिकृतो महाराजेन, त्वमेव जानासि काननस्यास्य सर्वान् तादृशप्रदेशान्, यत्र यत्र सम्भाव्यते चित्तशान्तिः, तदस्माभिः सार्द्धं काननमिदं परिक्रम्य परिदर्शयस्व तान् प्रदेशान् यत्र लोचनतृप्तिं हृदयानन्दञ्च विन्देम।

वनपालः—अज्ज अणुग्गहो ज्जेव एसो अह्मारिसजनेसु महाराअस्स, ता इदो एदु अज्जो।

विदू—(विचिन्त्य) अथवा अलं त्वया, अद्य खलु मे प्रियवयस्यो मामन्तरेण जनान्तरं समीपे नानुमोदते, तदहम् एक एव तदनुगन्ता भवेयम्। अथापरं श्रूयतां; अद्य भवतां महाराजो नितरामनुरज्यति विकचदलेषु कुसुमस्तवकेषु कामिनीजनाधरताम्रेषु च पल्लवभङ्गेषु, तद्यावदस्य सन्तोषणाय तानि तानि वस्तूनि महाराजस्य उपायनी-क्रियन्ताम्।

उभौ—अज्ज अणुग्गहीदा अह्मे। ता वन्दामो (निष्क्रान्तौ)।

विदू—स्वस्ति भूयात्। (दृष्ट्वा) गतः खलु वनपालः प्रियवयस्यस्य कृते मया समादिष्टानि पल्लवभङ्गविकचकुसुमादीनि संग्रहीतुम्, तद् यावदहमिदानीं वयस्यमुपसर्पामि। (परिक्रम्य नेपथ्याभिमुखमवलोक्य) भोः क्व नु खलु प्रियवयस्यो मे नलो भविष्यति, स मया सहकार-तरोरधश्छायायां मर्म्मरशिलातले विसृष्टः, तत्र तु साम्प्रतं नोपलक्ष्यते, तत् क्व नु खलु साम्प्रतं मया वयस्यः प्राप्तव्यः? भवतु य एते

राजपरिजनाः समन्ततो विचरन्ति, एतानेव पृच्छामि, (आकाशे) अरे दास्याः पुत्राः! क्व नु खलु साम्प्रतं प्रस्थितो भवतां महाराजः? (श्रुतिमभिनीय) किं ब्रूथ? एष महाराजः सहकारकुञ्जं समया माधवीलतामण्डपं प्रस्थित इति? अथ के के तस्य सहचारिणः? (श्रुतिमभिनीय) किं ब्रूथ? अनुव्रजतोऽपि अस्मान् गम्भीरं प्रतिषिध्य केवलं भवन्तमेव अनुगमिष्यन्तमावेद्य महाराजस्तां दिशं प्रस्थित इति? भवतु, तिष्ठत यूयं, एषोऽहमेव वयस्यस्य मानसमनुवर्त्तितुं माधवीलतामण्डपं गच्छामि। (निष्क्रान्तः)

( विष्कम्भकः )

(ततः प्रविशति सहकारकुञ्जं समया माधवीलतामण्डपे कामयमानावस्थो राजा)

राजा—(आत्मगतम्) भगवन् मन्मथ, सहसैव किमेतावतीं भूमिमाश्रितोऽसि? अपि तावत्कालं मया प्रतिषिद्धाधिकारः सम्प्रति यथावसरं वैरेण मां पीड़यसि? अथवा निरपराधो भवानस्मिन् मत्पीड़नकृत्ये, किन्तु सैव सापराधा मे प्रियतमा विदर्भराजनन्दिनी, अथवा कथं सैव, नालोकिता मया साक्षादेव सा ललितलावण्या, किन्तु निपुणचित्रकरोपनीते सुललिते चित्रशिल्पे, तदत्र परमनिपुणः चित्रकर एव सुतरामपराध्यति। अहो अनभिभवनीयस्वभावो मानसजन्मा, तथाहि—

प्रियाप्रथमदर्शनात् प्रभृति चित्रशिल्पे नवे,
मनो मधुरवासनारसविशेषमुग्धायितम्।
अहो वत पदे पदे हृदयभावविद्रावणे,
प्रयत्नविनियोजना सपदि किञ्च मिथ्यायते॥

तदद्य मन्ये प्रायेण सर्व्वैरेव समुपलक्षितो मे हृदयविकारः, कुतः?—

गण्डाभोगे विलसति परं पाण्डिमा प्रौढ़कान्तिः,
वाचां मध्ये स्फुरति सहसा नामभागः प्रियायाः।

श्वासो दीर्घं प्रसरति चिरं शून्यशून्येव दृष्टिः,
क्षीणप्राणा न चलति पुरो विव्रता देहयष्टिः।

तदद्य कं वा शरणमुपगच्छामि? अथवा कोऽत्र मन्दारकं प्रियवयस्यमन्तरेण मे शरणं मन्दभाग्यस्य? स हि सुखे दुःखे च निर्विशेषः सन्ततं द्वितीयं हृदयमिव मामनुवर्त्तमानो लक्ष्यते, स एव मे हृदयवेदनां पदे पदे स्वकीयामिव प्रतिपद्यते, कथितञ्च मया तस्यैव साम्प्रतिकं सकलमेव मानसं वस्तु, तत् क्व नु सम्प्रति मन्दारको भवेत्? (चिन्तां नाटयति)

(ततः प्रविशति राजान्वेषणपरो विदूषकः)

विदू--(आत्मगतम्) राजपरिजनैरावेदितं मे यथा प्रियवयस्यो मे माधवीलतामण्डपं प्रस्थित इति। तत् क्व नु खलु प्रियवयस्यो भवेत्? अपि तत्रैव तमासादयितुमर्हेयम्? (दर्शनमभिनीय) अये एष मे प्रियवयस्यः काममयमानावस्थो निर्निमेषदृष्टिरमण्डपः बाह्यवस्तुविनिवृत्तान्तःकरणः पश्यन्निव प्रियजनं हृदयवर्त्तिना लोचनयुगलेन सुतरामभिभूतो विभाव्यते, तदस्य पराङ्मुखस्यैव पश्चात् गत्वा नयने पिधाय परमकौतुकसमुत्पादनेन भावान्तरमुपजनयामि। मा तावत् पदविक्षेपशब्दः समुत्पन्नः प्रबोधमस्य समुत्पादयेत्! तदिदानीं प्रकृतमनुसरामि, (नानाविधभङ्गीविशेषान् नाटयन् राज्ञः पश्चादुपसर्पति) अथ यदि नयने पिधाय तूष्णीं तिष्ठेयं, तदा काम्यं कौतुकं विघटेत, सम्भाषणे प्रस्तुतेऽपि परिचितपूर्व्वः कण्ठस्वर एव शुद्धां प्रत्यभिज्ञां जनयेत्, तदत्र कीदृशमनुष्ठातव्यम्? (विचिन्त्य जायमाननृत्यप्रयत्नं संयम्य) भोः लब्धं प्रतिविधानम्, गृहीतनारीभूमिक इव नटमन्दनः कण्ठस्वरपरिवृत्तिं करोमि, तेनैव सम्पत्स्यते काम्यसिद्धिः। (पुनरपि विविधं भङ्गीविशेषमाश्रित्य पश्चात् गत्वा राज्ञो नयने पिदधाति)।

राजा—(कराभ्यां करयोः विदूषकमवलम्ब्य) अये केनानेन मे लोचनपिधायकेन भवितव्यं ? अथवा कोऽत्र प्रियवयस्यमन्दारकं विना मे लोचनपिधायको भवेत् ? नूनं मदीया विमनायमानता वयस्यमेवं प्रवर्त्तयति, तद् भवतु सम्भाषणेन विनिश्चितार्थी भवामि, (प्रकाशम्) अयि नयनपिधायक, अपि भवानेव मे प्रियवयस्यो मन्दारकः ?

विदू—(अविकृतकण्ठं) नहि नहि, (भ्रान्तिमभिनीय) अहो प्रमादः अविकृतकण्ठस्वरोऽस्मि ! (कण्ठस्वरं परिवर्त्त्य) नहि नहि, नाहं मन्दारको हरिचन्दनो वा, अन्यो वा कश्चन त्रिदिवपादपः ।

राजा—तत् को वा भवान् ?

विदू—(विकृतकण्ठं) कथमद्यापि को वा भवान् इति ?

राजा—तत् किं वा वक्तव्यम् ?

विदू—का वा भवतीति ।

राजा—(स्मितं कृत्वा) तत् का वा भवती ?

विदू—एवं साम्प्रतं गृहीततत्त्वोऽसि, तदिदानीमाकर्णय प्रकृत-वृत्तान्तं, अहं खलु दुहिता विदर्भराजस्य, मामधिकृत्य भवन्तं सुतरां विमनायमानं श्रुत्वा रागविवशा भवतो वैमनस्यमपाकर्त्तुम् इह विचिन्वती माधवीलतामण्डपं प्राप्तास्मि । तदनुगृह्यतामियं दृष्टिदानेन ।

राजा—(स्वगतम्) अहो ! यदि यथार्थमिदं मन्दारकवचनं स्यात्, तदा सकलदुःखनिकेतने वसुन्धरायामपि मे त्रिदिवमहोत्सवः सम्भाव्येत, अथवा कथमेतावत् सौभाग्यं मे मन्दभाग्यस्य ? तथाहि

> जातु क्षितिधरपीठात् न जायते कोमलं कमलम् ।
> प्राक्तनकर्म्मविपाको वितरति लोके सुखं दुःखम् ॥

विदू—प्रियतम, किमेवं तूष्णीमवतिष्ठसे ? यदि सम्भाषणमपि नास्ति, तत् का वा मन्दभाग्याहं त्वत्प्रणये ? एषाहं प्रतिष्ठे ।

राजा—अयि कौतुकप्रिये, अभिमानिनि, अलमनया कोपकल्पनया, कीदृशेनोपचारेण कौतुकप्रियायास्ते सम्भावनं क्रियतां तदेव सम्यक् विचार्य्यते ।

विदू—अपि साम्प्रतं निर्णयं गतोऽसि ?

राजा—अथकिम् ।

विदू—कीदृशोऽसौ निर्णयः ?

राजा—प्रिये, एष निर्णयः । (परावृत्य सस्मितमालिङ्गति)

विदू (स्वगतम्) अये ! कथं प्रकाशं गतोऽस्मि वयस्यस्य ? तत् किमिदानीं प्राप्तकालमुत्तरं प्रतिपत्स्ये (चिन्तयति) ।

राजा—(सोपहासम्) अयि प्रिये, किमिदानीं त्वं—

इन्द्रजालोपनीतस्य वस्तुनः परिणामवत् ।
सहसैवान्यथाकारा दृश्यसे नस्वरूपतः ॥

तत् किं विविधकलाकौशलचतुरा भवती पुरुषायिता माम् उपहसितुम् ?

विदू—(सप्रतिभं) नहि नहि इदानीं तव प्रिया नास्मि, किन्तु प्रियवयस्यो मन्दारक एव, अन्यथा कथमिदानीं पुरुषजनोचितः कण्ठस्वरः सम्भवेत् ।

राजा—वयस्य, कथमिदानीमेव, प्रथमतोऽपि भवान् मया मन्दारक एव गृहीतः, किन्तु भवदनुवृत्तिं कुर्व्वता मया तथा तथा वाचो विसृष्टा इति ।

विदू—कथमिव ? मया तु स्वरूपतिरोधाने महानेव यत्नः समाश्रितः ।

राजा—वाढ़ं समाश्रितमहायत्नोऽसि, तथापि –

यस्ते कोमलकामिनीसमुचितः कण्ठस्वरः कृत्रिमः
तत्रासीत् पुरुषोचितस्वरकला पूर्व्वं प्रकाशं गता ।

वाङ्ग ते कठिनो वचोऽपि परुषं मुग्धाजनानां न तत्,
प्रागल्भ्यञ्च परं ममाजनि तदा पुंस्त्वाववोधाय ते ॥

अथवा यदि सा समक्षमेव समुपगता स्यात् तथापि न तथा विश्वसितु-मर्हामि, कुतः—

सा कल्पपादपविसृष्टमनर्घरत्नं
क्षीरोदसागरभवा च सुधा मनोज्ञा ।
मन्दाकिनीकनकपङ्कजविन्दशोभा
सा कापि पुण्यपरिपाकफलस्य सीमा ॥

विदू—भो वयस्य, यद्येवं, तत् किमेवं पर्य्याकुलो भवान्? असीमपुण्यसम्पदधिकारिणा राजचक्रवर्त्तिना भवता ननु सुलभैव सा भविष्यति ।

राजा—वयस्य, न सम्यक् जानीषे ; कुतः ?

वणिग्जनात् स्वल्पपणेन लोहं
क्रीणाति लोके ननु येन लोकः ।
क्रेतुं न तेनैव मणीनपीष्टे,
पुण्यानुरूपं फलमात्मनः स्यात् ॥

तत् कियानेष पुण्यमहिमा यत्परीपाकात् सा मया लब्धव्येति सम्भावयितुमर्हसि । यदपि राजचक्रवर्त्तित्वमतितरां पुण्यस्य फल-मित्युपक्षिपसि, तदपि मे वाढं पातकफलमिवाद्य प्रतिभाति, कुतः ?

राज्यार्थं ननु चिन्तया विघटते सा मे मनोमन्दिरे,
विच्छिन्नः परिकल्पनाव्यतिकरो भूयो न सन्तिष्ठते ।
प्रत्यक्षं तददर्शनेऽपि हृदये तद्दर्शनादुद्भवन्
आमन्दो न मयाद्य राजपदवीयोगादहो लभ्यते ॥

अत एवाद्य दुर्म्मनायितमात्मानं राजकृत्येषु अपर्य्याप्तं विभाव्य सचिवा-रोपितराज्यचिन्ताभारो मानसनिर्वृतये विलासोद्यानमिदमायातोऽस्मि, किन्तु नास्ति तथापि मे चित्तस्य शान्तिः ।

विदू—भवतु भो वयस्य, एहि यावदुद्यानशोभामवलोकयावः। अनासाद्यैव पथ्यभेषजे रोगमुक्तिमभिवाञ्छसि? तदेहि।

राजा—यदभिरुचितं वयस्यमन्दारकाय।

विदू—भो वयस्य, पश्य पश्य विलासोद्यानस्य परां रमणीयतां, वसन्तकुसुमोपहारसमलङ्कृतास्तरवो विलासिन इव परिदृश्यन्ते, वनपालपरिमार्जितेषु तलप्रदेशेषु परिक्षिप्तैः सुरभिकुसुमकदम्बकैः स्वयमिव स्वपूजामभिनिर्वर्त्तयन्ति। एते च गृहीतनवीनपल्लवा रसालपादपा वातविकम्पितशरीरा निर्वापयितुमिव मदनतापतप्तं ते शरीरं व्यजनानिलं व्यापारयन्ति। माधवी चेयं अचिरोन्मीलित-कुसुमभारनिर्भरा समालिङ्गन्ती रसालपादपं विलासिनीव सानुरागा कञ्चन रसातिशयमावर्जयति मानसे सुमनसाम्। तद्वयस्य, रमणीय-स्तावदयं काननोद्देशः, तदत्र क्षणं विश्रम्य मानसावसादम् अवसादय।

राजा—वयस्य, सम्यगुपलक्षितं भवता, सत्यमेवैषा विश्रान्तिभूमि-रवसाददुर्मनायितानाम्, तथाहि—

मन्दं मन्दमुपेत्य मुग्धपवनो दूरात् प्रसूनाचलं<br>
लीलामाश्रयतीव तद्गतलतास्पर्शात् प्रहर्षादसौ।<br>
गन्धैरन्धयते मिलिन्दनिवहान् रम्या वनश्रीरियं<br>
वासन्ती वितनोति किञ्चन सुखं दैवादिवासादिता॥

अपि च—

नवकुसुमविभूषां सन्दधानः शरीरे,<br>
किसलयरुचिरागं सर्वतः सम्प्रविन्दन्।<br>
मधुरुचिदयितायाः सम्प्रसादं विधास्यन्,<br>
मलयपवनयोगात् कम्पिताङ्गो रसालः।

विदू—वयस्य, पश्य पश्य, असौ फलभारनम्रः सहकारो भवन्त-मचिरागतं सार्वभौमं सम्भावयितुमिव विनयेन वर्त्तते।

राजा—वयस्य, कोऽत्र विस्मयः? रीतिरियं परोपकारव्रतानां, तथाहि—

परार्थमेते निजशीर्षभागे, फलानि सन्धार्य्य नमन्ति वृक्षाः।
पयोधराः शस्यविवृद्धिहेतो, रब्धेः समादाय जलं क्षिपन्ति॥

विदू—भो वयस्य, यद्येते परोपकारार्थमेव फलानि धारयन्ति, तदा किमिदानीमस्माकं नोपकुर्व्वन्ति?

राजा—कथमिव?

विदू—किमत्र प्रष्टव्यं नाम? युज्यते तावदिदानीं परिणतैः फलस्तवकैरस्माकमाराधनम्, यतो वयं वनविहारपरिश्रान्ताः क्षुत्-पिपासापर्य्याकुलाः स्मः।

राजा—वयस्य, अचेतनाः खल्वमी पादपाः, कथं चेतना इव फलान्यस्माकमुपनयन्तु?

विदू—तत् स्वयमेव समाहृत्य वयमेषां परोपकारव्रतं पूरयामहे।

राजा—वयस्य, मा मैवम्, कुतः?

फलञ्च पुष्पञ्च महीरुहाणां, शोभा न सा जातु वियोजनीया।
सुवर्णसौभाग्यवियुक्तदेहा, न कामिनी नेत्रसुखं विधत्ते॥

विदू—भोः, अभिचारकर्म्मणा मनोरथं सम्पादयितुकामेन हिंसादि-निबन्धनं पातकफलमिव नेत्रसुखमुत्पादयितुकामैरस्माभिः किमु क्षुत्-पिपासाज्वालया नामशेषतापि समुपेक्षणीया? तदलमीदृशेन कानन-विहारेण, यत्र सत्स्वपि समीपे नानाविधेषु भोज्यवस्तुषु नास्ति मे मन्दभागस्य भोजनावकाशः। (कतिचित् पदानि गच्छति)। अथवा का गतिः? मृदङ्गादिभिरिव तालप्रयोगे वीणानिक्वणो मयापि वयस्य-मानसमेव अनुवर्त्तनीयम्।

राजा—वयस्य, मन्दारक, अद्य भवदनुवृत्तिरेव अस्यामप्यवस्थायां मे निर्वृतिमुपजनयति, तदलं संरम्भेण वनविहारानन्तरमचिरमेव पटवासमुपगम्य त्वदीयमन्तःकरणमनुवर्त्तिष्ये। (क्रमशः)

विदू—साधु वयस्य साधु, कोऽन्यस्त्वामन्तरेण मन्दारकस्य सुखं दुःखञ्च जानीते? तदिदानीं काननविहारो मे महते सुखाय कल्पते, एहि तावत् पारिजातकुसुमञ्जुलतरं विकसितवञ्जुलरसालकुरुवकगन्धराजवकुलपादपैरुपशोभितं मालतीमल्लिकामाधवीवल्लीसमलङ्कृतोपकण्ठं मलयमारुतोल्लासितप्रसूनसौरभं विलासोद्यानम् इदमभितो विहृत्य मानसं परितर्पयाव:। (परिक्रामत:)

राजा—वयस्य, मन्दारक, जानास्येव मे हृदयावस्थां, सम्प्रति मम हि—

वहिरिव कुसुमसुषमा हृदयं तिमिरै: समाच्छन्नम्।
चितिधरगह्वरगेहं लग्नं वहिरातपे यद्वत्॥

तदनेन वनविहारेण प्रतिक्षणप्ररूढप्रियास्मृतिरनीशोऽस्मि सुखमखण्डमुपभोक्तुम्। क्षणे क्षणे समुदेति मानसे सैव मे मनोरथभूमि:। तथाहि मन्ये—

सुषमा कुसुमनिरूढ़ा यदि दयिता सा भवेदस्मिन्।
काञ्चनमिव मणिवद्धं वनमिदमद्धा बमन्तीयम्॥

वयस्य, किंवा वहुलमावेदयामि—

विना तल्लावण्यं वितथ इव वल्लीसमुदयो
विना तस्या: स्पर्शं कुसुममपि नो सार्थकजनु:।
अलं वा पुष्पाणां ललितरचना पादपतले,
न चेत् पद्मं नीरे कथमिव तदीयस्तुतिकथा॥

विदू—भो वयस्य, किमिति अदृष्टैव तत्रभवतीं विदर्भराजनन्दिनीम् एवं विमुग्धोऽसि? अहन्तु कुमारसदृशाकारे भवति दर्शनोत्तरमेव परं स्नेहं विन्दे, तत् कीदृशोऽयं ते मोहमहिमा?

राजा—वयस्य, मा मैवम्, कुत:?

चित्रे पुरा चतुरचित्रकरोपनीता
सा चित्ततस्कररुचिः प्रविलोकिता मे ।
तस्मात् परं मनसि कल्पनया प्रणीय
तन्मूर्त्तिमस्मि सुतरां परिमोहितात्मा ॥

विदू—वयस्य, नेदं न जानामि, तथापि कथयामि नास्ति ते परमार्थविवेक इति ।

राजा—वयस्य, कथमिव ?

विदू—अपि नेदं जानाति भवान्, यथा चतुरचित्रकारिणो रमणीयतामतिमात्रोसुद्भावयितुकामा अनुकार्य्यं सौन्दर्य्यं परिवर्त्त्य चित्रे प्रदर्शयन्ति, तदत्रापि न तथा प्रस्तुतमिति को वा ब्रूयात् ?

राजा—वयस्य, मन्दारक ! न परमार्थं जानासि, कुतः ?

नैपुण्यं यावदेवास्तु शिल्पिनां शिल्पकर्म्मसु ।
अनुकार्य्यस्य लावण्यान्निकृष्टानुकृतिश्चिरम् ॥

विदू—राजासनमध्यासीनानां चित्तवृत्तिरेवंदर्शिनी, अस्माकन्तु दीनब्राह्मणानां नैवं प्रतिभाति ।

राजा—वयस्य, कथं वा न प्रतिभायात् ? तथाहि पश्य—

अभिनयकुशलानामुत्तमानां नटानाम्
अपि बहुविधभावाभासदानव्रतानाम् ।
अविकलमनुकार्य्यावस्थया नो विधानम्,
स्वहृदयपरिबोधस्तत्र तु स्यात् प्रमाणम् ॥

विदू—यद्येवं तदा वञ्चितोऽसि नूनं निपुणतमानां शैलूषाणामभिनयदर्शनव्यापारेण, तथाहि श्रूयताम्—लोके प्रायेण प्रतिदिनमुपजायमानमेव दृश्येषु निपुणनटैरभिनीयमानं रसान्तरमुत्पादयतीति ।

राजा—वयस्य, यद्यपि तथा तर्कप्रसादलब्धजन्मना निश्चयेन चित्रलेखापेक्षया विदर्भनन्दिनी निकृष्टैव स्यात्, तथापि विपुलायामस्यां

वसुन्धरायां अनेन चित्रलेखेन येव सुसदृशी, सैव मे मनोरथभूमिः, कथमिति ?

आदौ दृष्टा चित्रशिल्पे मया या,
सैवाभून्मे रागपात्रं मनोयः ।
सा चेद् भैमी तत्र मे चित्तरागः,
सा चेदन्या तत्र मे चित्तरागः ॥

विदू—उन्मत्त, नेदृशं लावण्यं विधातुः शिल्पं स्यात् ।

राजा—वयस्य, महति भ्रमान्धकारे पतितोऽसि, तथाहि पश्य—

यो धाता नलिनीदलानि तनुते स्वामन्तवापीजले,
यो वा चान्द्रमसीं रुचिं रचयते पर्व्वण्यपूर्व्वात्मिकाम् ।
यो वा नूतनपल्लवेषु कुरुते दिव्यप्रसूनस्रजं,
सोऽयं तादृशरूपसाधनविधौ किं नो समर्थायताम् ॥

अपिच—

अंशतो लक्षिता विद्या वालकानां परीक्षणे ।
सर्व्वविद्यासमुत्कर्षमनुमापयते ध्रुवम् ॥

विदू-(मुखभङ्गीं नाटयन्) हुम् ! सर्व्वविद्यासमुत्कर्षमनुमापयते ध्रुवम् ! अथ भवन्तं पृच्छामि, यदि एकदेशदर्शनेन वस्तूनां सर्व्वविज्ञानमङ्गीकरोषि, तदा मम इमां भुजङ्गकुटिलां यष्टिमपि सरलामवेहि ।

राजा—कथमिव ?

विदू—यतस्तावत् अस्या अपि पाददेशात् प्रभृति चतुरङ्गुलं स्थानं सारल्येन तवैव हृदयमनुकुरुते ।

राजा-वयस्य, वृथैव मे चित्तवृत्तिं तर्केण पराभवितुमीहसे,

कुतः— दिङ्मोहस्तर्कयुक्तिभ्यां नापक्रमति चेतसः ।
अपरोक्षपरिज्ञानं यावन्नोदेति देहिनाम् ॥

विदू – (स्वगतम्) अहो अस्य निर्ब्बन्धः ! तावतापि प्रयत्नेन न शक्यते मानसमस्य परिवर्त्तयितुम्, तत् किमिदानीं करिष्ये ? भवतु अन्यतः सञ्चारयामि । (प्रकाशम्) भो वयस्य, अनार्य्याः खल्वमी पादपाः, ये चित्तनिर्वृतिमुपपादयितुं भवता समाश्रिता अपि सुतरामनिर्वृतिमिव भवतः समुपदिशन्ति, तदेहि यावत् इमाननार्य्यानपहाय मलयानिलनर्त्तयमानतरङ्गसम्पातमधुरस्य तीरतरुस्खलितप्रसूनरसबिन्दुचन्द्रकालङ्कृततटोपान्तसलिलस्य धवलमरालमालासञ्चरणजटिलस्य दाड़िमसरोवरस्य मणिमयसोपानिकायामुपविश्य शीतलमलयानिलेन शरीरं मानसञ्च परितर्पयावः ।

राजा—वयस्य, किमिति मुधैव पादपानधिक्षिपसि ? अनपराधाः खल्वमी प्रकृतेवृत्ते, तथाहि दुःसाध्येन आमयेन परिपीड़िते यदि नोपकुर्व्वन्ति भेषजानि तत्र को वापराधो भेषजानाम्, वयस्य, मन्ये सम्प्रति सर्व्वार्थनिष्पादनसमर्थः कल्पवृक्षोऽपि नितरामल्पायते मे मनोवेदनामपनेतुम् । तदलमेतानुपालभ्य, कुतः ?

पुष्पोपहारपरिशोभितकुञ्जपुञ्जे
छायातरुप्रकरशोभिवनोपकण्ठे ।
सङ्कल्प्य कामपि मदं पुरतः प्रपन्नः,
सत्यं मदीयदुरितेन विपर्य्ययोऽद्य ॥

विदू—(साधिक्षेपम्) कथं वा नोपालभेय ? यतो मूढ़ाः खल्वमी महीरुहा न जानन्ति बहुमानं महीपतीनाम् । येन किल एवमेतानपेक्षमाणोऽपि सकलापेक्षणीये भवति निरपेक्षा एव समुपलक्ष्यन्ते, तद् वयस्य, क्षणं प्रतिपालयस्व, यावदेतानतिमूढ़ान् बहुग्रन्थिकठोरेण तैलाभ्यङ्गगृहीतसारेण कुटिलकुटिलेन दण्डेन समुद्बोधयामि ।

(आहन्तुमुपगच्छति)

राजा - (निरुध्य) वयस्य, मा मैवम्, नैते भाजनमाक्रोशस्य येन बहिश्चेतनेष्वेव आक्रोशः फलं प्रसूते, नान्तश्चेतनेषु ।

विदू—तदास्ताम्, एहि सम्प्रति मणिसोपानिकामाश्रयाव: ।

राजा—एवं भवतु (परिक्रम्य उभौ मणिसोपानिकायामुपविशत:)

विदू—भो वयस्य, पश्य पश्य एमेषां तरङ्गाणां विनयवर्त्तिताम्, एते हि सुदुर्लभदर्शनं त्वां मणिसोपानिकायामुपलभ्य पादक्षालनमिव कारयितुकामा: पादोपकण्ठमुपसर्पन्ति, तदितोऽप्यधस्तादवतीर्य्य परिपूरय मनोरथं तरङ्गबान्धवानाम् । (राजानं करे गृहीत्वा अवतारयति)

राजा—वयस्य, मनोज्ञेयं सौन्दर्य्यपरम्परा तरलतरङ्गसञ्चारिण्या वापिकाया:, तथाहि

मृदुलपवनयोगाद् भग्नकायैस्तरङ्गै:
सुललितसलिलेयं वापिका सम्पतन्ती ।
प्रणयरुचिरचेता नायिकेव प्रसन्ना
द्रवयितुमुपतापं यत्नसीमां दधाति ॥

विदू—भो वयस्य, इतोऽपि पश्यतु भवान् मलयानिलसञ्चालितायां कमलदयितायां दशाविशेषं मधुव्रतस्य ।

राजा—वयस्य, एवं पश्यामि, शोच्यस्तावदयं मधुव्रतस्तपस्वी, महतीमिव दुरवस्थामनुभवति, तथाहि

पातुं मधूनि विपुलं विदधत् प्रयत्नं
भृङ्गो यदैव परिसर्पति पङ्कजिन्याम् ।
हा हा तदैव च समीरसमीरिताङ्ग:
शून्ये समुत्पतति लूनमनोऽभिलाष: ॥

विदू—भो: ! अधमस्तावदेष धूर्त्तमधुव्रत:, येन एवमसकृत् प्रतिषिध्यमानोऽपि एनामेव अनुवर्त्तमानो दृश्यते, तदुच्यतामेष धृष्ट:, अलमस्या: पुनरनुबन्धेनेति ।

राजा—वयस्य मन्दारक, न कदापि परिप्राप्तोऽसि तथा रागगोचरतां, येनैवमभिधत्से, पश्य,

प्रणयो विदितनिषेधो द्विगुणीकुरुते मनोभावम्।
अचलनिरुद्धस्रोतास्तरङ्गिणी तीव्रतां धत्ते॥

विदू—(स्वगतम्) अये अनेन वृत्तान्तेन समुपक्षिप्त आत्मापि प्रियवयस्येन। तद् भवतु एवं तावत्। (प्रकाशं) भोः वयस्य, किमिति पदे पदे तामेव अविदितगुणविशेषां अधिकृत्य आत्मानं खेदयसि? परिह्रीयतामेष दुरन्तो भावानुबन्धः. दृश्यन्तामेतानि मृदुलभुजलताललितानि तरङ्गितवापीसलिलानि, घनचन्दनगन्धबन्धुराणि मन्दसमीरणस्पन्दनानि, मदनगीतिकापर्य्याकुलेन मधुकरपटलेन असकृदनुवध्यमानानि विकचसरसीरुहाणि, आतपत्रानुकारिकमलदलान्तरालगतानि मनोहराणि च विलासवन्ति चक्रवाकमिथुनानि।

राजा—वयस्य, मन्दारक, किमेतानि मया न दृश्यन्ते? एतान्येव साभिनिवेशं दृश्यमानानि जीवनं मे धारयन्ति, कुतः?

वीचिश्रेण्यां ननु भुजलतामार्दवं मे प्रियायाः,
पद्मोत्सङ्गे करचरणयोः सौष्ठवं सन्निधत्ते।
शैवालेषु स्फुरति मसृणा केशपाशस्य शोभा,
हंसे सौम्यस्मितसुभगता पद्मवन्धे च गन्धः॥

विदू—(स्वगतम्) यथा हि कुक्कुरविषवेगपर्य्याकुलः सर्व्वं कुक्कुरमयं पश्यति, तथैव एष दमयन्तीपर्य्याकुलो जगदेव तन्मयं पश्यति, तत् किमत्र प्रतिविधेयम्?

वातः पद्मदलानि संविघटयन् प्राणप्रियादूतवत्
पद्मिन्या हृदयस्य वृत्तिनिवहं वक्तीव मामञ्जसा।
क्रीड़ाकौतुकिनीव चञ्चलजला वापी प्रियं मारुतं
सिञ्चन्ती जलशीकरैः प्रियकथास्तोमानिवोत्कण्ठते॥

विदू—भो वयस्य, यदि केवलं प्रतिपदं तामेव स्मरन् विक्लवं नाटयेथास्तदा नाहं ते सहचरो भवितुमर्हामि, (मुखं परावर्त्त्य निपुण-

मन्यतो दृष्ट्वा) भो वयस्य, येयं मरालमालापर्य्याकुला नातिदूरवर्त्तिनो नीरोपान्तभूमि: तत्र दृष्टिं देहि।

राजा—किं निमित्तम्? (दृष्टिं ददाति)

विदू—तस्या एव भूमेरुपरिष्टात् सुविशुद्धकाञ्चनप्रायं किमपि दृश्यते, अदृष्टपूर्व्वमिदं, तत् किन्न, खलु स्यात्? अपि भवतैव मानस-सरोवरशोभामतिशयितुकामेन केनापि निपुणशिल्पिना काञ्चनमयशत-पत्रं कारितम्?

राजा—नहि नहि अहमपि भवानिव साम्प्रतमेव प्रथमदर्शी।

विदू—तत् केनानेन वस्तुना भवितव्यम्!

राजा—(आलोकयन्) वयस्य, अहं हि जानामि

> या माधवी श्रोस्त्रिदिवे विहृत्य,
> मन्दाकिनीकाञ्चनपद्महस्ता।
> समेत्य वापीसलिले निलीना
> तदीयपाणिस्खलितं किलैतत्॥

अथवा— आवर्त्तानिलचालिता कमलिनी किञ्जल्कमालाघना,
> मन्दस्पन्दितरङ्गसङ्गतिवशात्तीरोपकण्ठं गता।
> प्राचुर्य्यात् परिपिण्डिताङ्गरचना स्वर्णायमानद्युति:,
> तद्रागादिव हंसपङ्क्तिरमला तत्पार्श्वतो राजते॥

विदू—यथा तथा भवतु, यावत् समीपमुपसृत्य विगतशङ्कौ भवाव:

राजा—एवं क्रियताम् (उभौ सोपानादवतीर्य्य पश्यत:) वयस्य, अपि पश्यसि?

विदू—अथकिम्। (निपुणं निरूप्य सहर्षम्) भो वयस्य, दिष्ट्या वर्द्धसे, एष नूनं काञ्चनखनिसम्भूत: काञ्चनशैलाङ्कुर: प्रादुर्भवति, तदत्र वयस्य: प्रमाणम्।

राजा—(स्मितं कृत्वा) वयस्य, तत्त्वविमुखो भवानन्यथैव कल्पयति, नायं काञ्चनशैलाङ्कुर:, परं कश्चन काञ्चनमयो मरालयुवा मलयानिल-

सम्पर्करम्ये तीरोपकण्ठे गाढ़ं निद्रासुखमुपभुङ्क्ते। तथाहि

पराङ्मुखं मस्तकमात्मदेहे,
प्रविश्य सङ्कोचितकीर्णपक्षः।
एकं पदं कुक्षिगतं दधानः,
सन्दृश्यते नूनमसौ विहङ्गः॥

विदू—कथमयं सचेतनो जीवः? मम तावदयं अचेतनः पिण्ड-भूतः प्रतिभाति। तत् किमत्र प्रमाणमनुसन्धत्से।

राजा—वयस्य, पश्य प्रमाणं—एतस्य खलु

उच्छ्वासनिश्वासवशाच्छरीरे,
प्रसारणाकुञ्चनयोः प्रकाशः।
प्रभञ्जनोत्पातवशात् कदाचित्,
शीर्षे पदे पक्षयुगे च कम्पः॥

विदू—वयस्य, यद्येवं तदा अपूर्वमिदं प्रमोदस्थानं, नहि ताव-न्मात्रेण तृप्तिं जनयति, तद् गच्छ विन्दैनं नेत्रसुखलाभाय।

राजा—करेण गृहीतो यदि कष्टातिशयमयं गच्छेत्, तदा महत् पातकं सम्पद्येत।

विदू···किमेतन्मात्रेण परमानन्दो वर्जयितव्यः, स्वर्गसद्दिश प्राणिहिंसनमिव नैतत्समये मरालस्य स्वल्पमात्रं संयमनकष्टमुपेक्षणीय-मस्माभिः।

राजा···भवतु यावदेनं शिथिलपाणिस्पर्शेन ग्रहीष्यामि, यथास्य गृहीतस्य न शरीरपीड़ा भवेत्।

विदू···का हानिः, यथा कथञ्चन कार्य्यसिद्धिरावश्यको नाम। तद् गच्छ, अलं विलम्बेन।

राजा···वाढ़ं, एष गच्छामि। (गच्छन् दक्षिणबाहुलोचनयोः स्पन्दं सूचयन्) अये! किमिदम्!

वामेतरभुजस्पन्दः स्फुरितं दक्षचक्षुषः।
किमकाण्डे इयं प्राप्तं फलसम्भावना कुतः?

अथवा वनविहारपरिश्रमादुपकुपितेन वातेन तत्तदङ्गकम्पनमुत्पादितं भवेत् तद् गच्छामि । (निष्क्रान्तौ)

विदू—(राजानं निर्वर्ण्य) अहो विहङ्गवञ्चनचातुर्य्यं वयस्यस्य, एष हि पृष्ठेन कुब्ज इव शरीरं त्रिधा विभज्य उपहसितापरूपवामनरूपो निःशब्दपदसञ्चारं तथा गच्छति यथा वसुन्धरापि अविदितपादन्यासा वञ्चिता स्यात् । (सहर्षं) अये एष गृहीतप्रायो हंसः । (पुनः सहर्षं) अये कथं गृहीत एव । (तारं) वयस्य अपि गृहीतः ?

राजा—अथ किम् । किन्तु नालमस्मि एकाकी एनं विनिरोद्धुं, तत् त्वमपि सत्वरमेहि यावदुभावेव मिलित्वा निरुन्ध्याव ।

विदू—बाढ़ं एष आगच्छामि (इति उत्प्लुत्य निष्क्रान्तः)

समाप्तः प्रथमाङ्कः ।

## द्वितीयाङ्कः ।

( ततः प्रविशति आकाशमार्गे प्रवहणारूढः कलिः )

कलिः— श्रुत्वा स्वयंवरकथामिह भीमजाया,
देवर्षिनारदमुखादनुरागमुग्धः ।
भावं परीक्षितुमना: कलिरेष तस्याः
क्रीड़ावनं प्रति विमानचरः प्रयामि ॥

अहो चिरादद्दष्टपूर्व्वेयं मे विदर्भभूमिः कालेन सुतरामन्यथैव सम्वृत्ता, पर्य्यायेण जगदधिकारिणो नाम भवन्ति चत्वारो युगदेवाः, तेषु च समापतितस्तावदद्य सत्यस्याधिकारः, ततो लुप्तशक्तय इव प्रतिभान्ति सर्व्वथा सर्व्वे मदनुचराः कामप्रभृतयः, प्रभावश्च भूयानेव समुपलक्ष्यते प्रथमयुगानुचराणां विवेकदयादाक्षिण्यप्रभृतीनाम् । स्मरामि हन्त तदानीन्तनीमवस्थां अस्या वसुन्धराया मदधिकारसमाक्रान्तायाः, तदा खलु—

धर्म्मः क्षीणज्योतिरासीत् प्रजानां, पापोत्सेकादुत्कटेषु प्रवृत्तिः ।
यज्ञो लुप्तः स्वर्गगन्ता न कश्चित्, पश्चात्तापो नापि पापे रतानाम् ॥

अपिच—

क्षौणी क्लृष्टमदीकृतापि सुषुवे शस्यानि नो कर्षकैः,
वृक्षाः पुष्पफलच्युतताः किशलयैः शून्याश्च कष्टप्रदाः ।
सन्ध्यावन्दनवर्त्तनादिनियमा भ्रंशं द्विजानां श्रिताः
शूद्रा मुद्रितनित्यकृत्यविकटा भ्रष्टस्वभावाः स्थिताः ।

अपिच तदानीम्—

सौहार्द्दं मर्द्दिताङ्गं गुरुगणगरिमा दुर्व्विबोधः प्रजाभिः,
दाराणां प्रीतिहेतोः पितृहृदयरुजोत्पादनं नित्यकृत्यम् ।
आत्मा देहादभिन्नः श्रुतिरपिच मुधा धूर्त्तमात्रोपजीव्या,
नादृष्टं मानमिष्टं मखफलमनृतं नो परोक्षाः पदार्थाः ॥

तदद्य सर्व्वमिवेदं विपरीतं परिणमति, तथाहि—

लोकानां कलुषाद्भयं समभवत् पुण्येषु धन्या मतिः,
क्षौणी शस्यसमन्विता प्रसविनी जाताः शुभाः पादपाः ।
सन्ध्यादिष्वनुरागिता गुरुगणे भक्तिः प्ररूढा परा,
श्रौतस्मार्त्तविधानसाधनरतिर्व्वर्णाश्रमाचारिणाम् ॥

अपिच—

प्रातः प्रभृति नित्येषु कर्त्तव्येषु मनस्विनाम् ।
दृश्यते परमासक्तिः साधुतेव शरीरिणी ॥

अथवा कियानेव मे समयो निखिलभुवनविध्वंसनपटीयसी वसुन्धरामिमामन्यथाकर्त्तुम्, यस्य मम—

उद्यद्दुर्गमसर्गवर्गविकटा वृत्तिः परध्वंसिनी,
प्रोद्दामप्रकटप्रभञ्जनसमा शक्तिर्जनस्तम्भिनी ।
विघ्नोद्घाटनपाटवव्यतिकरात् क्रोधो जगद्रोधकः,
प्रातर्दीप्तमयूखसूरसदृशी दृष्टिर्ज्वलज्ज्योतिषा ॥

अहं हि—

आकाशस्पर्शिशीर्षः क्षितिधरनिकरान् निक्षिपेयं समुद्रे,
तीरोदीर्णप्रवाहप्रतिभयविषमं शोषयेयं तमध्वा ।
उद्यत्तिग्मांशुमूर्त्तिं गगनपटतटोत्पाटितं वा विदध्याम्,
उग्रोग्रध्वान्तधाराजटिलमपि जगत् पक्ष्मकम्पेन कुर्य्याम् ।

तदत्र कन्दर्प एव मे परमो दर्पः स्वाधिकारप्रतिष्ठापन कृत्ये । अथ, देवर्षिणा नारदेन कथितं निषधनाथो वीरसेनिः सुतरां विदर्भदुहितरं दमयन्तीं कामयत इति । अहो साहसं तस्य यौवनाभिमानदुर्विदग्धस्य मूढ़स्य ! कुतः—

या सौरभभ्रमितचञ्चलभृङ्गपङ्क्तिः,
दीव्यद्गुणा चितरसा नवपुष्पमाला ।
इन्द्रादिभिः प्रतिपलं वहितव्यपेक्षा
तां लिप्सते वत नलो निषधाधिनाथः !

अथ किं तस्यां स इव सापि तस्मिन् मनोभावं धत्ते ? अथवा अलीकमेवैतत् कुतः ?

इन्द्रादयो वयमपि प्रचितानुरागाः
सौन्दर्य्यसारशरणायितभीमजायै ।
दूतीजनानपि विसृज्य कृतप्रयत्नाः,
नूनं न सा सुरविरागवती भवित्री ॥

भवतु प्रियसहचरं कामदेवमामन्त्र्य सर्वमिदं विज्ञास्यामि, तत् क नु खलु साम्प्रतं कामदेवः स्यात् ?

( ततः प्रविशति आकाशे पुष्पमयविमानस्थः
कुसुमोज्ज्वलवेशः कामदेवः )

काम—देव, एष प्राप्तोऽस्मि, तदाज्ञापयतु भगवान् किं मया दासजनेनानुष्ठातव्यम् ।

कलि:—सखे, कामदेव, समुत्कण्ठते मे हृदयं प्रियाया विदर्भजाया वृत्तमाकर्णयितुम्, श्रूयते नृपापसदस्य नलस्य तत्र भूयाननुराग इति, अपि सत्यमेवैतत् ? किञ्च, दमयन्त्या अपि तत्र समासक्तमन्तःकरणं तर्कयसि ? सर्व्वमिदं विस्तरेण वर्णयितुमर्हसि कुतः ?

अस्मासु तस्याः परमानुरागं श्रुत्वा पुरा निर्वृतिमान् भवेयम् ।
ग्रीष्मात् परं वार्षिकवर्षयोगात् यथा रसाकर्षणखिन्नपृथ्वी ।

कामः—देव, यद्यभयं, तदा कथयितुमर्हामि ।

कलिः—सखे, अलमाशङ्कया, यथावद्वस्तुविनिवेदनं सुहृद्धर्मः । तदशङ्कमभिधीयताम् ।

कामः—देव, कथयामि, श्रूयताम्, अस्ति कदाचित् दमयन्तीचित्रदर्शनविमनायितेन राज्ञा नलेन सवयस्येन उद्यानवापीपवनसेवनं कुर्व्वता कश्चित् सुवर्णमयो मरालः समासादितः ।

कलिः—सुवर्णमयो मराल इति ? अपूर्व्वः खल्वेष प्रबन्धः । ततस्ततः ?

कामः—ततश्च शकुनिकृतेषु परमाभिज्ञो राजा तस्य कातरस्य पानभोजनप्रार्थनावचनेन दयापरो निजं पटवासमानीय पानभोजनदानैरेनं समुज्जीवितवान् । अथ राज्ञो मधुरेण स्वभावेन पर्य्याप्तेन च पानाहारलाभेन परितोषितः किलासौ दमयन्त्या रूपातिशयमाख्याय तं तथा रागं नीतवान् यथा चित्रदर्शनसम्प्ररूढा रागवृत्तिः षोड़शीमपि कलामस्य नो विन्दति । तेनैव च हंसेन तदनन्तरं दमयन्तीसमीपमुपसृत्य तस्या अपि तथैव नलं प्रति वर्द्धितो रागानुबन्ध इति ।

कलिः—सखे अपि जानीषे, कोऽयं मरालापसद इति, अपि कश्चन मायावी छद्मवेशमास्थाय अस्मद्वैरनिर्य्यातनकाम्यया तयोरन्योन्यमेवमनुरागमुद्दीपितवान् ? यद्येवं तदा नायं सुचिरं सहते स्वीयमुच्छ्वासम् । तत् कथय केनानेन भवितव्यम् ?

कामः—देव, कथमयं मायावी स्यात्? अयं हि पितामहेन देवाधिपतिना दमयन्तीं प्रति नितरां नलमावर्जयितुं स्ववाहनभूतो हेमहंसः प्रेषितः ।

कलिः—किं नाम, पितामहेन निगृहीताः स्मः? अहो दुर्ग्रहः!

वार्द्धक्यात् परिवर्जितः कमलजः कर्त्तव्यबुद्ध्या स्वया,
नोचेन्निर्जरदुर्जयं कलिमिमं हित्वा नले किं रतः?
रे दुर्जात चतुर्मुख प्रणयिनीं कृत्वा सुतां कामतो,
नो जानासि किमस्मदीयहृदयं धिक् ते सुराहङ्कृतिम् ॥

कामः—देव, नात्र विशेषेण भगवन्तं पितामहमेव दूषयितुमर्हसि, यतो नियतमस्य प्रियानुवर्त्ती धर्म्मो नाम नलार्थमात्मना भगवन्तं पितामहं प्रकाममनुरुन्धे, तस्यैव नूनमिदं फलं सम्भवेत् ।

कलिः—आं एवं, धर्म्मो नाम मे प्रतिकूलवर्त्तीति, अहो दौर्वृत्तम्! साक्षाद् वैरमाचरितुमशक्तो द्वारीकरोति सम्प्रति वैराचरणे पितामहम् । अहो मूढ़ता! धर्म्म,

चतुर्मुखं चक्रधरं पुरारिं वज्रायुधं वापि सहायमेहि ।
नालं विनेतुं ननु मत्प्रभावं भवान् कदाचित् भवितेति वाढ़म् ॥

तदद्यापि विरम्यतामस्माद्व्यवसायात् । सखे कामदेव, अथ स राजा किमारम्भः सम्प्रति? अपि प्राप्ता तेन दमयन्त्याः स्वयंवरणवार्त्ता?

कामः—देव, अथकिम् । किन्तु यावद्देवासौ स्वयंवरवृत्तान्तमुपलभ्य विदर्भगामिनं पन्थानमनुसृतवान् तावद्देव पर्य्यायेण

पुरन्दरश्च वह्निश्च यमो वरुण एव च ।
स्वेषु भैमीप्रवृत्त्यर्थं दूतकृत्यं ययाचिरे ॥

कलिः—किं नाम? विफलप्रयत्नास्तर्हि अस्मद्विसृष्टाः सर्व्व एव दूतीजनाः?

कामः—देव, अथकिम् । का कथा तेषां परिमितसामर्थ्यानां

दूतीजनानां, त्रिभुवनविक्षोभसमर्थेन मयापि न पारितं दमयन्तीचित्तमन्यथा प्रवर्त्तयितुम् ।

कलिः—(सक्षोभम्) अहह ! किं कुर्य्याम ? नालमस्मि व्यवस्थापयितुमात्मानम्, तथाहि

अब्धिग्रासप्रसक्तप्रविततवडवावक्त्रविच्छिन्नवह्नि-
प्लुष्टान्तस्तीव्रतापप्रविकटविपुलज्वालया दग्धमङ्गम् ।
कर्त्तव्यव्यस्तबुद्धिव्यसनपरिभवोत्पातदुर्जातदर्पः
क्षोभः कोऽपि प्रदीप्तः प्रलयघनघटोद्गीर्णतीव्रान्धकारः ॥

तदिदानीं

प्रासादैः सह काननैश्च तरसा सर्व्वान् विदर्भानहं
किं नो ध्वंसगतिं नयामि कुपितो रुद्रोपमो विग्रहे ॥

कामः—देव, अलमनेन रोषावेगेन । श्रूयतां श्रोतव्यम् ।

कलिः—क्रोधेनालमिहाथवा प्रियतमा भैमी विदर्भेषु यत्
पद्म लोलचरित्रमप्युपगता विष्णुप्रिया प्रोच्यते ॥

तदुच्यतां कीदृशं श्रोतव्यम् ?

कामः—देव, श्रूयताम्, अथ यावद्देवासौ पुरन्दरादिभिः सम्प्रार्थितो नितरां दमयन्तीगृहीतहृदयोऽपि बहुक्षत्वः श्लाघ्यमात्मानं मन्यमानः सानन्दमेव दौत्यम् अङ्गीकृतवान्, तावदेव तदुपरि पतिता गगनतलात् सिद्धजननिसृष्टा कुसुमवृष्टिः, पुरन्दरादिभिश्च मनोरथलाभपरितुष्टैः विसृष्टा राज्ञे निषधेश्वराय बहुविधा एव वरवाचः ।

कलिः—मूढाः खल्वमी देवाः, ये धूर्त्तापसदस्य नैषधस्य वञ्चनाचातुर्य्यमपि नोपलक्षितवन्तः ।

कामः—देव, कथमिव ? अत्र नलस्य कीदृशं वञ्चनाचातुर्य्यं सम्भवेत् ?

कलिः—सखे, अत्रापि किमावेदयितव्यमस्ति ?

कामः—देव, अस्ति, न खल्वहमवधारयामि ।

कलिः—यद्येवं श्रूयताम्

विदर्भशुद्धान्तपुरं निरन्तरं कृतावधानैः पुरुषैः सुरक्षितम्।
तत्र प्रवेशो हि सुदुष्करस्ततो न दूतकृत्यं करणीयमस्य तत्॥

कामः—देव, नैवमवगन्तुमर्हसि, यतो हि समादिष्टमभिलाषानुरूपमन्तर्धानमस्य पुरन्दराद्यैः।

कलिः—वाढ़म्?

कामः—यदि न वाढं, किं देवो विज्ञाप्यते।

कलिः—सखे, कामदेव, आस्तां सर्व्वमिवेदमस्मत्प्रतिकूलं, तथापि

समग्रजगदुद्धतिप्रतिभयोपशान्तिक्षमः
क्षमोऽरसि कठोरतात्रुटितमत्तगोत्राह्वयः।
भवद्विभवयोजनाघटितपापसाहायकः
करोम्यचिरमात्मना सकलमेव चूर्णायितम्॥

अथवा अलं सकलेन, योऽयं दुर्विदग्धो विदग्धजनाभिमानी चन्द्रकुलकलङ्को वैरसेनिः स एव मे चिरात् प्रभृति प्रतिपक्षो देवानामद्य दमयन्तीं दत्ते, न तु मामभिजानाति, तदेष एव मे विषयः क्रोधस्य तदयमहमिदानीम्—

काष्ठैरापुष्टवैश्वानरविकटशिखाभीषणक्रोधराशिः,
जाग्रद्घोरप्रतापैः प्रविचरितमरुद्व्यस्तपातैः स्फुलिङ्गैः।
प्रासादग्रामसम्यद्द्रुमयुतनिषधान् भस्मशेषान् विदध्याम्,
उत्पाट्य क्षौणिपीठान्निषधपतिमसुं स्वं ततः स्थापयिष्ये॥

तत् कामदेव, कथय, क्व साम्प्रतं स धृष्टः?

कामः—देव, स खलु साम्प्रतं सखीजननिषेवितया दमयन्त्या समध्यासितामन्तःपुरपुष्पवाटिकामनुसरति।

कलिः—सखे, काम, प्राप्तं प्रतिविधानम्, एष एव शुभावकाशो नैषधस्य व्यवसायमन्यथा कर्त्तुम्।

कामः—कथमिव?

कलिः—श्रूयताम् यदा नाम नैषधो देवकृत्यसम्पादनाय दमयन्ती-समीपमुपगमिष्यति, तदा त्वया—

येनास्त्रेण पुरारिमानसमभूद् भ्रष्टं तपस्याव्रतात्,
येनास्त्रेण च मेनकामुपगतो गाधिस्तनूजः पुरा।
तेनोन्मथ्य नलस्य चित्तमनघं संघट्टय बुद्धिप्रभां
देवादेशविशेषसाधनविधौ व्यर्थश्रमः साध्यताम्॥

तदलं विलम्बेन, गच्छ स्वनियोगमनुष्ठातुं यावदहमपि अस्मिन्नवसरे नलपरिशून्येषु निषधेषु प्रविश्य स्वं प्रभावं प्रकटयामि।

कामः—यथाज्ञापयति देवः (उभौ निष्क्रान्तौ)

(विष्कम्भकः)

(ततः प्रविशति पुष्पवाटिकायां ससखीजना शिलातलमधिशयाना विरहोत्कण्ठिता दमयन्ती)

दम—सखि, कल्पलते अपि जानासि ममाद्य हृदयावस्थां।

कल्प—कथं न जानामि, अद्य तु विशेषेण प्रकाशितासि, मया पुनस्त्वदीयहृदयावस्था तदानीमेव विदिता।

दम–कदा?

कल्प—यदा अपूर्व्वदर्शनो हेमहंसः प्रियसख्या एकाकिन्या अनुवध्यमानः प्रियसखीं गभीरां माधवीलतापद्धतिं नीतवान्।

दम सखि, निपुणं जानासि। ततः प्रभृति एव विकारं नीतास्मि मदनहतकेन। अथ अद्य मां कीदृशीं प्रेक्षसे?

कल्पः—सखि, किमत्र निपुणं प्रेक्षितव्यम्? चिरात् प्रभृति विरहपर्य्युत्सुका स्वभावतस्तनुशरीरापि तनुतरशरीरासि, केवलं चिरन्तनं लावण्यमेव अवशिष्यमाणं तव प्रत्यभिज्ञां जनयते। पाण्डुतेयं सुसञ्चिता कपोलयुगले, प्रक्षीणकण्ठस्वरा न क्षमसे यथोचितं वाचमपि प्रवर्त्तयितुम्। प्रायेणैव निर्णिमेषनयना दृश्यमात्रविनिवृत्त-मानसा भावनाव्यापृता परिलक्ष्यसे। पुनः पुनरनुरुध्यमानापि नैव

नियोजयसि मानसं दिवसकृत्येषु, तदिदं स्थूलदृशामपि विज्ञानविषयं किं पुनः सुनिपुणदर्शिनाम्? किञ्च, अपि स्मरसि यन्मूर्च्छितासि पञ्चमे दिवसे राकानिशाकरं वीक्षमाणा पौर्णमासीरजन्याम्?

दम—सखि, सत्यम् ईदृश्येव संवृत्तास्मि। एतावता कालेन तवापि यत् लज्जया नावेदयम्, तत्सर्वं मदन एव मे विपरिणमय्य विज्ञापयति। अयि कल्पलते, कस्य वा अन्यस्य कथयेयं, त्वमेव मे चिरात् प्रभृति अधिकारिणी निभृतवृत्तान्तेषु, तत् तवैव कथयामि।

कल्प—सखि, कथय कथय, यथाहं समदुःखभागिनी दुःखन्ते लघूकुर्य्याम्।

दम—सखि, श्रूयताम्, जानास्येव मे हेमहंसानुसरणं यावत्?

कल्प—अथ किम्। तदनन्तरन्तु न जानामि, येन ते मनोविकारः प्रथममवतीर्णः।

दम—तदेव कथयामि, तदानीं माधवीलतापद्धतिमवतीर्णायां मयि तावदेव गत्वा सत्तो नातिदूरे मदभिमुखः स्थिरं तिष्ठन् हेमहंसः स्वजातिसमुचितां वाचमाश्रित्य विज्ञापितवान्—भवति दमयन्ति, विरम्यतामतैव मम ग्रहणाध्यवसायात्, अहमन्यतमः पितामहवाहनेषु हेमहंसेषु, तदस्मदभिलाषमन्तरेण को वा समर्थो ग्रहीतुमस्मान्, तदाकर्णय यदावेदनार्थं निभृतमानीतासि। अस्ति सकलनायकगुणालङ्कृतो नलो नाम भूपालो निषधानाम्, पितामहनिदेशात् तदीयगुणमोहाच्च स त्वया मायिकारभूतया वरणीयतां धत्ते, इति, अन्याश्च कथितास्तेन तदर्थपर्य्यवसायिन्यो वाचः, तत एवाहमभिभूतास्मि।

कल्प—सखि, दमयन्ति, नेदं तव विकारकारणं भवितुमर्हति, तदन्यदप्यस्ति ।

दम—सखि, कल्पलते, नास्ति तव किमपि रहस्य ; तदाकर्णय, अस्ति अन्यदपि किञ्चित् ।

कल्प—कथय किन्तत् ?

दम—तदिदं श्रूयताम्, येन मे मनो नितरामवसन्नम् ; उक्तं देवहंसेन यथा, राजपुत्रि, भवतीमधिकृत्य मदनेन सुतरां निषधराजो विकारं नीतः, किं बहुना स हि मदनमोहग्रस्तो राज्यचिन्ताममात्येषु विन्यस्य चित्तनिर्वृतये सवयस्यो विलासोद्याने सरोवरसोपानमवतीर्णः सुतरामेव ताम्यति, तत्रापि नासादयति लेशमात्रामपि शान्तिम्, सर्वमेव शान्तिकरमस्य साम्प्रतमशान्तये परिकल्पते इति ।

कल्प—सखि, तत् किमद्याप्येवं विधुरासि ? जतुरसपिण्डयोरिव युवयोस्ताप एव संघटनकारी भविष्यति, तदलं कातर्य्येण ।

दम—सखि, हंसो नामासौ तिर्य्यगन्ववायजात इति कस्तत्र दृढः प्रत्ययः ?

कल्प—सखि, नैवं संशयितुमर्हसि, यथायं तिर्य्यग्वंशसम्भूतोऽपि असाधारणं सुवर्णमयं देहमादत्ते, तथैवास्य सम्भविता तिर्य्यग्जातिविलक्षणा प्रत्ययोग्यतापि भाषितेषु । अपि दृष्टपूर्वस्त्वया कदापि तथाभूतः सुवर्णमयविग्रहो मरालः कुत्रापि ?

दम—सखि, जानामि स[illegible], किन्तु स्वार्थेषु सर्वत्र अनिष्टमेव समाशङ्कन्ते जनहृदयानि । यावदिदं हंसकथितं स्वचक्षुषा न पश्येयं तावदत्र न सम्पद्यते दृढ़प्रत्ययो मे । तदत्र कीदृशः सुगमोऽभ्युपायः स्यात् ।

कल्प—सखि, अलमावयोरत्र तदभ्युपायचिन्तया, स एव परिचिन्तयेदभ्युपायं येन त्वदीये हृदये निषधनाथमधिकृत्य सम्यक्तया

रागः प्रकटितः, येन च अदृष्टाश्रुतपूर्व्वो हेमहंसो नामासौ प्रियवृत्तान्त-निवेदनाय भवदन्तिके प्रेषितः ।

दम—सखि, अहन्तु नैव अवगच्छामि, परं सर्व्वमेवेदं मत्-प्रतिकूलस्य विधेर्ममैव दुःखमर्पयितुं निष्ठुरविलसितम् । नास्ति खल्वस्य निर्द्दयस्य दैवस्य भाग्यहीनायां मयि लेशोऽपि करुणायाः, तथाहि पश्य, सौरभसारसम्पर्कसुभगा अपि मलयसानुसमीरणा मलयज भुजङ्गविषव्याकुला इव सुदुःसहाः समुत्प्रेक्ष्यन्ते, स्मारं स्मारं मराल-वृत्तान्तस्य लोकान्तरमिव प्रस्थितास्मि । किं बहुना, चिराय मे शान्तिनिष्पादनव्रता माधवीलताश्रेणिरपि मरकतवापिकापि इन्द्र-नीलमणिवेदिकापि निरभिमाना इव समुपलक्ष्यन्ते ; सखि, कृतमिदानीं दुःखदानव्रतं विधातारवलम्ब्य, यथोचितमात्मनैव प्रयत्नमवलम्बस्व, अन्यथा नूनमचिरादेव मां स्मरणीयां दशां नेष्यति कामहतकः । [सलज्जा अधोमुखी तिष्ठति) ।

कल्प—सखि, किमेवं चञ्चलासि ? कथं वा त्वयि विधाता निरनुकम्पः स्यात् ? नित्यमेव ते पितरौ तवैव शुभकामनया देवतासु परां भक्तिमादधानौ वर्त्तेते, त्वमपि कुमारी भगवत्याः कुमार्य्या आशु-तोषयोग्यस्य च भगवत आशुतोषस्य सभक्तिकमर्च्चनं विदधासि, किमेतावतापि त्वयि नियतिरकरुणा भवितुमर्हति ? तत् धैर्य्यमव-लम्बस्व, यथाकालमवश्यं लब्धासि मनोरथफलम् देवताप्रसादात् ।

( ततः प्रविशति चेटी )

चेटी—भर्त्तृदारिके, देवो विज्ञापयति ।

दम—(ससम्भ्रमं) किमाज्ञापयत्यम्बा ?

चेटी—एतद् विज्ञापयति ..आगामिदिवसे स्वयंवरसभायां मिलितायां नानादिग्देशागतेषु सकलगुणालङ्कृतेषु राजन्येषु, परमैश्वर्य्य-महत्तमेषु देवगणेषु, मणिप्रभादीप्तोत्तमाङ्गेषु भुजङ्गेषु, सङ्गीतरङ्ग-सुनिपुणेषु प्राप्तगर्व्वेषु गन्धर्वेषु, विलासपरायणेषु निखिलेषु दैतेयनिचयेषु,

विविधेषु चापरेषु जनिमत्सु, यः कश्चिदेकः स्वमनोरथानुरूपस्त्वया वरणस्रजा सम्मानयितव्यः, तदद्य कुलपरम्परागतेन विधानेन विधातव्या त्वया आयुष्मत्या कुलदेवताया अम्बिकायाः समर्च्चना, तत् सत्वरमेव मया अपराणि पूजोपकरणानि प्रेष्यन्ते, त्वया च सखीभिः साकं संयतचित्तया स्वयमेव पूजाकुसुमानि समाहृत्य कृतनियमाभिषवया यथाकालं देवीभवनं प्रति प्रस्थातव्यम् इति ।

दम—मेनके, विज्ञापय अम्बाम्, एषाहमचिरमेव तदादेशमनुतिष्ठामीति ।

चेटी—यथाज्ञापयति भर्त्तृदारिका ।

कल्प—मेनके, अस्मद्वचनेन विज्ञाप्यतामम्बा यथा अनेन ते प्रबन्धेन अनुगृहीता वयं भर्त्तृदारिकाया मङ्गलवृत्तान्तसमुत्कण्ठिता वर्त्तामहे, कुसुमेषुव्यापारस्तु सख्या प्रथमत एव परिगृहीतो वर्त्तते, अद्य पुनरम्बादेशात् स एव विशेषेण समवलम्बयते इति ।

चेटी—यदादिशति भवती ।

दम—अयी धिक् कल्पलते, किमेवं प्रगल्भवचना अम्बाया अपि अर्थान्तरमुपक्षिपसि ? न रोचते मे सर्व्वदैव तवेयं प्रगल्भवचनपरिपाटी ।

कल्प—मुग्धे, अद्यापि अम्बामविदितवृत्तामवधारयसि, अहो मुग्धता ! एकाकिनि, नेदं तथा स्यात् ।

दम—कथमिव ?

कल्प—यदा प्रियभावमुग्धा मूर्च्छितासि, तदा अन्तःपुरात् अतराहितं श्रुत्वा तव पितरौ सममेव समागतय बहुधा तव दशापरिवृत्तिमीक्षमाणौ सर्व्वमेव भावं विदितवन्तौ इति इत्थमिवेदं स्यात् ।

दम—हा धिक् प्रमादः ! हा धिक् प्रमादः ! कथं न केवलम् अम्बया तातेनापि विदितवृत्तान्तास्मि ! सखि, कल्पलते, सुतरामपराद्धं मे दुरन्तमूर्च्छया, यस्या एव प्रसूतिरियं मदीयमानसविकारवेदिता

गुरुजनानाम् । तत् साम्प्रतं लज्जातिशयदुर्भरमन्तरं मे वसुन्धराया विवरमिव गन्तुमीहते, हा धिक् ! मोहात् मया समाचरितं कुमारीजनविरुद्धं किमपि लोकातिगम् । अद्य प्रभृति सर्व्वा एव कुमार्य्यो लज्जा मेव गमिष्यन्ति मदीयेनानेन वृत्तान्तेन । तत् किम् इदानीं करणीयं मन्दभाग्यायाः ?

कल्प—अम्बाया आदेशानुगुणं पूजाकुसुमानि संगृह्य यथानियमं अम्बिकामर्च्चयित्वा आगामिदिवसे वरणमाल्येन प्रियकण्ठस्थलमलंक्रियतां, किंवा अन्यत् करणीयमस्ति ?

दम—सखि, यदि स्वयम्बरसभायां स नागच्छेत् ?

कल्प—स कः ?

दम—अयि चतुरे, जागरितापि सुषुप्तिं नाटयसि ?

कल्प—व्रीडानते, त्वमपि अनूढापि ऊढेव वाचं ब्रवीषि ?

दम—धिक् प्रहसनम, एतावदवस्थां गतामपि माम् इतरामिव उपहससि ?

कल्प—सखि, संशयाविषयेऽपि संशयमारूढासि अत एवं ब्रवीमि, न खलु सततमेव परिहासमधिक्षमता तदलं चिन्तया, यथा तत्रभवती तथा सोऽपि भवत्यां परं प्रणयमवलम्बते, को वा हेतुरनृतभाषणे हंसस्य ? तद् यावदेष श्रुतवानसौ तव स्वयंवरणवृत्तान्तं तावदेव कुण्डिनाय प्रातिष्ठतेति अवितथमिदं वचनं, तत् प्रकृतिमापद्यस्व ।

दम—सखि, यद्येवं भवेत् तदैव ते सख्या जीवनाशा, अन्यथा स्मरणीया ते सखी भविष्यति ।

कल्प—शान्तं पापं, प्रतिहतममङ्गलम् । सुचिरम् आराधिता दाक्षायणी नूनमेव सम्पादयिष्यति मनोरथं सख्याः, तदलं विलम्बेन, भगवत्या अम्बिकाया नियमार्च्चनाय कुसुमान्युपचिनुवः, तेन भगवती प्रीता अम्बायाश्च आदेशः परिपालितो भवेत् ।

दम—एवं कुर्व्वः । (उभे कुसुमचयनं नाटयतः) ।

( ततः प्रविशति शङ्कितावस्थो राजा नलः )

नलः – अहो प्रतारणा नाम महदाशङ्कास्थानम् । तथा हि—

द्वारि दौवारिकान् दृष्ट्वा शङ्कितो दर्शनादहम् ।
देवानान्तु वरं स्मृत्वा मुक्तशङ्कः कथञ्चन ॥

तथापि तस्कर इव तमिस्रायां नीलनिचोलप्रच्छादितशरीरः सुरवर-प्रभावप्रच्छन्नरूपो विहरामीति लज्जा मां सुतरां बाधत एव । अथवा तस्कराणां स्वार्थमभिसन्धाय, मम तु परार्थमभिसन्धाय प्रवृत्तिरित्येव आवयोर्विशेषः । तदलमत्र लज्जया, कुतः ?

पान्थश्रान्तिमपोहितुं प्रसहते सूरं वटो वासरं,
मेघो आगतशान्तये जलनिधेः क्षारं जलं सेवते ।
दीपो वस्तुविकाशनाय च निजं तैलं दशां शोषति,
स्वं भावं नियतव्यवस्थमजहन्न स्यात् परार्थक्षमः ॥

अहो स्मरामि दारुणं विलसितं दैवस्य, कुतः ?

क्व स्वयंवरसभामुपेयुषो भीमजावरणमाल्यभागिता ।
क्व प्रियाप्रणयिदेवताकृते दूतता, हतविधेर्विडम्बना ॥

अथवा किमिदं विषीदामि, कुलक्रमागतमेवैतदस्माद्दशाम्, यत् परार्थे स्वार्थपरिहारो नाम, तथा हि—

चन्द्रो निर्जरतृप्तये निजकला दत्ते परार्थव्रती,
शीतांशुप्रकरेण शस्यनिवहानुज्जीवयत्यात्मनः ।
तातो मे तदनुक्रमेण धरणौ जातः परार्थोन्मुख,
तद्वंशाङ्कुरतामुपेत्य किमहं न स्यां समर्थस्तथा ॥

तदलमावेगेन, निरुध्य समुपात्तमहामोहमन्तःकरणतत्त्वम् देवताकृत्य-साधनार्थी स्वाङ्गीकृतमेव प्रतिपालयेयम् । (परिक्रमति) । अहो ! इयमेव सा विलासवनवाटिका, यत्र सम्प्रति दमयन्ती सखिभिः सह क्रीड़न्ती कौमारसुखमुपास्ते इति श्रुतं परितः परिक्रामताम् आलापात् सखी-जनानाम् । तदत्रैव मया प्राप्तव्यं नेत्रनिर्व्वाणम् । अहो ! अत्र प्रिया-

परिभोगसुभगे विलासकाननविभागे किमिव तथा वर्त्तते यदसाधारणं सौभाग्यं नोपभुङ्क्ते ? तथाहि—

मन्दं वाति समीरणः प्रियतमास्पर्शेन पूतो भवन्,
गुञ्जन्तो मधुपा मधूनि ददते भीमाङ्गजाश्रोत्रयोः।
वल्ली कोमलविग्रहा कुसुमिता सत्पल्लवाः पादपाः,
पुष्पाणि प्रियया दृशा प्रतिदिशं दृष्टानि सौख्याय यत्॥

किन्तु केवलमहमेव न तैः सर्व्वैः परितुष्यामि। मम हि सम्प्रति—

सुप्तस्येव नवीनवस्तुरचना स्वप्नेन सम्पादिता,
लुप्ता क्वापि मनोरतिः प्रियतमामालम्ब्य या प्राक्तनी।
आलोकात् परमन्धकार इव मे चित्तं समाक्रामति,
पुण्यानां विलयो भवत्यतितरां दीव्यन्ति पापक्रमाः॥

तत् किमहो प्रलयघनघटातमःसङ्घातेन समुद्विजते मे हृदयम्? नालमस्मि प्रयत्नशतेनापि तदवस्थापयितुम्। किं करोमि, कमधुना शरणं गच्छामि ? अपि मत्त एव विलुप्येत सुधाकरकुलस्य विमलः कीर्त्तिसम्प्रदायः ? भगवन् मन्मथ, निवार्य्यतां मामधिकृत्य तथा वैरनिष्पादनप्रयत्नः। किमित्यन्यथासमाचरणेन स्वनाम्नो विफलतामाशङ्कसे ? तदलं त्वया। भगवन् मन्मथमथन, शङ्कर, अपि प्रत्यहं मत्सम्पादितामाराधनामपि विस्मरसि ? अथवा किमत्र विस्मयकारणं, मत्ता एव मतिविभ्रमवन्तो भवन्तीति सुविदितमेव सर्व्वेषाम्, तदलं त्वयापि। भगवन् पुरन्दर, हुताशन, पितृपते, देव वरुण, अपि भवन्तोऽस्वप्ना अपि सुषुप्ताः स्थ, यदेवमात्मकृत्यनिष्पादनपरस्यापि मे स्वकार्य्यविरोधिनीमधीरतामुपेक्षमाणा उदासीनास्तिष्ठथ ? (संवरणं नाटयित्वा) अये एवमवस्थां गतोऽस्मि ? प्रकृतमपहाय कृतं पदं हन्त प्रकृतविरोधिनि मार्गे, धिक् प्रमादः! नूनं सर्व्वदर्शिनो देवा मामीदृशं पश्यन्तः परिहासस्मितं कुर्व्वन्ति। हृदय, अपि विस्मृतं त्वया गौरवं सुधांशुवंशस्य ? महाजनानां नीतिमनुसृत्य प्रकृते वर्त्मनि

पदं कुरुष्व, अलमद्यापि विकल्पेन, अलमद्यापि विषादोपष्टम्भेन, तदिदानीं क्व नु खलु मया दूतवृत्तिमास्थितेन विदर्भनन्दिनी प्राप्तव्या ? (पश्यन् परिक्रामति) ।

कल्प—सखि, विस्मृतकुसुमचयना मलयानिलचालितां वल्लीं वीक्षसे ? अहो मुग्धता !

नलः—(श्रुत्वा) अये, इतो नातिदूरे कामिनीकण्ठ इव प्रतिभाति । तत् पश्यामि (पश्यति) ।

दम—(संवरणं नाटयन्ती) न हि, नहि, एते दुष्टमधुकराः कुसुमान्यनुवर्त्तमाना मम भीतिमुत्पादयन्ति, अत एवं स्थितास्मि । तत सखि कल्पलते, निवार्य्यन्तामिति दुरन्तव्यापाराः, यथा मे वदनममी मातिवर्त्तेरन् ।

कल्प...अयि, सुचतुरे, त्वमिव नाहमन्धास्मि, तत्किमिति जाग्रतीमपि मां सुप्तामिव मन्यसे ? कुतो नु खलु मधुकराः ?

दम—(लज्जां नाटयति)

कल्प—भवतु, एहि यावदपराणि कुसुमान्युपचिनुवः ।

दम—एवं कुर्व्वः (उभे कुसुमानि चिनुतः) ।

नलः—(दृष्ट्वा) अये ! इदं समुद्भिन्नयौवनं कुमारीयुगलं पुष्पोद्याने पुष्पाणि समाहरति । अहो विधेः सौन्दर्य्यसारनिष्पादनाभिनिवेशः ! प्रायेण तुल्यैवानयोराकृतिः समाना च वयोऽवस्था । मन्ये तावदत्रैव समाधिः प्रजापतेः सकलसौन्दर्य्यनिष्पादनोपकरणानाम् । तत् किमेते विदर्भनन्दिनी तत् सखी च अथवा कोऽत्र सन्देहावकाशः ? कुतः ?

> भीमात्मजा सहचरीसहिता वनेऽस्मिन्,
> आस्ते तदा परिजनोक्तिवशादबोधि ।
> द्वे चावले कुसुमसञ्चयकृत्यमग्ने,
> तन्निश्चितं सहचरीसहितास्ति भैमी ॥

तदुपसर्पामि प्रकृतकृत्यनिवेदनाय, (किञ्चित् गत्वा पुनः प्रतिनिवृत्य) अये एवं विमुग्धोऽस्मि, अदृष्टपुरुषान्तरमन्तःपुरमिदं सहसैव माम-प्रत्यभिज्ञातपूर्व्वमासाद्य भीतभीतं भविष्यति । तदलममेन व्यापारेण, अन्तरालमास्थाय सम्यक्तया भावानुबन्धप्रभृतिकमस्या निरूपयामि, (अन्तरालं गत्वा पुनः प्रतिनिवृत्य) अहो विभ्रमः ! किमेवं शङ्कासङ्कु-समाकुलोऽस्मि । देवप्रसादेन लब्धान्तर्धानशक्तिः अदृश्यस्तावदनयोरिमे-ताभ्याम्, तदेवं करोमि, (एकान्ते स्थितः) ।

दम—सखि कल्पलते, सुसञ्चितानि पर्य्याप्तानि पूजाकुसुमानि, तदेहि यावदम्बिकागृहं गत्वा तदीयां पूजां निर्वर्त्तयावः । (वामा-क्षिस्पन्दनं सूचयित्वा) अये वामं मे लोचनं परिस्फुरति, किम्वात्र अभिमतं मे सम्भवेत ? अथवा अचिन्त्योपनिपातानि अवश्यम्भाविदैव विलसितानि भवन्ति ।

कल्प—सखि, नैतावन्ति कुसुमानि पर्य्याप्तानि, तदपराण्यपि समाहराव: ।

दम—एवमस्तु । (कुसुमचयनं नाटयतः) ।

नलः—(आत्मगतं) अहो निर्व्वन्धः !

> चित्तं मनोरथफलत्वरितं यदस्याः,
> कालात्ययं न सहते कुसुमोच्चयेऽपि ।
> अस्ताद्रिपङ्कजकुलं तपनानुरक्तं
> पद्माकरे दिवसशेषमवैति दीर्घम् ।

तत् किमेष निर्व्वन्धो मामेवाधिकरोति ?

कल्प—सखि, एष नल—(इत्यर्द्धोक्ते) ।

दम—कुत्र कुत्र सः ? (इतस्ततः पश्यति) ।

कल्प—अयि, एकनिष्ठे, कथयामि,...एष नववनसङ्गतो वकुल-

कुसुमालङ्कृतो भूभागः, तद्देहि ततः कुसुमानि सञ्चिनुवः । (आत्मगतं) अहो अस्या औत्सुक्यम् ! तृणनामनि श्रुतेऽपि स्वदयितमाशङ्कमाना त्वरामाश्रयते ।

दम—(लज्जां नाटयन्ती) तथा क्रियताम् । (परिक्रामति)

नलः— अहो श्रोत्रामृतं वचनमस्याः,
वाङ्मात्रमाधुर्य्यविशेषहेतो
श्चित्तं ममोत्समर्पति मोहराशिम् ।
तत्रापि यन्नामधिकृत्य मुग्धा,
को वास्ति तस्मात् परतो विनोदः ।

यत् सत्यम् एतेन प्रियतमाप्रियवचनेन विमूढ़ एवास्मि, अवितथमेव हेमहंसभाषितं यथा भैमी मुग्धेति । तृषितलोचन, अपि अद्यापि न पूर्णस्ते मनोरथः ? क्रियानेव ते समयो गतो विषयान्तरविनिवृत्तस्य तपस्यामिवाचरतस्तपस्विनः । तस्यैवाद्य परिणमति परमोपादेयः फलराशिः, तत् किमिदानीमपि आत्मानं न वहुमन्यसे ? हृदय, तव तु एतावता परितोषः । मूढ़, घलं ते विकारेण, स्थैर्य्यमवलम्बस्व, विकारातिशयमासाद्य मा तावद्देष निक्षिप्यतामयशःपङ्के, भगवन् मन्मथ, अनङ्गोऽपि एवं माद्यसि, तदयुक्तमेव विहितं त्रिलोचनेन, तव तादृशं देहं भस्ममयं कृतवता, (संवरणं नाटयित्वा) एषः अधीरोऽस्मि । धिक् प्रमादः ! यथा तथा विकलीभवति मे स्थैर्य्यप्रयत्नः, प्रतिपदमेव पदमादधाति हृदये दमयन्तीविषया मनोवृत्तिः । तत् कीदृशोऽस्मि,

धैर्य्याभिमानो विलयं गतो मे,
कामः प्रकामं तनुतेऽधिकारम् ।
लज्जा समाक्रामति विक्रमेण,
क्षान्तं गतं मे दुरितं प्रतिष्ठाम् ।

तदास्तामिदं सर्व्वमेव, यथा तथा वा भवतु, आगमनप्रयोजनमिदानीं साधयितव्यम्, तदत्र कीदृशी सरणिरनुसर्त्तव्या ? भयव्याकुला हि

राजान्त:पुरचारिण्यो भवन्ति, विशेषेण च एषा मुग्धा, तन्नालमस्मि सहसैव एतयोरात्मानं प्रकाशयितुम्, अत: प्रतिपाल्यतामवसर एवास्या: ! (स्थित:)

दम—अलमद्यापि प्रतीक्षया, सत्वरमनुष्ठीयतामनुष्ठातव्यम्।

नल:—अये, किमिति भाषितमस्या मन्मानसमनुवर्त्तते, तत् किमिवेदम् ?

कल्प—(चीयमानं कुसुमं विचित्य) असंगृहीतेषु अनुष्ठानोपकरणेषु किमेवं ब्रवीषि ?

दम—सखि, त्वरते मे हृदयं सर्व्वार्थनिष्पादनक्षमाया अम्बिकाया: समर्च्चनाय। अहं हि जानामि यावच्छीघ्रं समर्च्चनमम्बिकाया: तावच्छीघ्रमेव मनोरथलाभ इति।

कल्प—सत्यं सुतरामुत्कण्ठितासि, एवमेव हृदयम् उत्कण्ठितामाम, तदिदानीं पर्य्याप्तानि कुसुमानि, अथ दृश्यमानात् कमलसरोवरात् कमलानि, श्रीफलपादपाच्च करप्राप्यस्तवकात् फलालङ्कारशोभिताश्च स्निग्धरूपाणि पत्राणि सञ्चित्य न चिरादेव देव्या अम्बिकाया गृहं गच्छाव:, मन्ये तावता कालेन सकाद्देव्या विश्लिष्टा: परिजनास्तत्र अस्मदपेक्षां कुर्व्वते इति। तदेहि।

दम—तथा। (परिक्रामत:)

कल्प—सखि, इदमदूरे कमलसर:, अहो कीदृशानि शोभन्ते विकचकमलानि, एतानि आत्मनां देवीपूजोपकरणतां विदित्वेव परित: स्मयन्ते। तदेहि यावदिमानि कमलानि समासादयाव:।

नल:—एष एव मे समय: स्वमात्मानं परिदर्शयितुम्, इतो नातिसन्निहितमन्त:पुरम्, येन अस्माकमन्योन्यसंवादो जनान्तरं नैव संस्पृशेत्, तदिदानीं देवतावरप्रसादेन केवलमात्मा मे दमयन्तीदृष्टिमेव नातिवर्त्तताम्।

दम—(सहसापसृत्य) सखि, अपि न लक्षयसि ?

कल्प—लक्षयाम्येव।

दम—तत् किमभीता यथापूर्व्वमवतिष्ठसे?

कल्प—यतो नाहमाक्रान्ता मदनचाण्डालेन।

दम—असम्बद्धभाषिणि, किमेवमसम्बद्धं प्रलपसि?

कल्प—कथमसम्बद्धं नाम, अपि त्वमपि न जानासि, यथा मदनचाण्डालगृहीतानामिव कमलानि, कमलदलानि, कुसुमानि, सुधाकरकिरणाः, मलयमारुतप्रवाहाः, भ्रमरगुञ्जनानि, कोकिलकाकलीप्रभृतयश्च तापाय परिकल्पन्त इति, न तु स्वप्रकृते स्थितानामपि।

दम—मुग्धे नाहं कमलादिशोभामधिकृत्य तथा ब्रवीमि।

कल्प—किमन्यदितो रमणीयतरमस्मिन् यद् भवत्या मदनपरवशाया भीतिमुत्पादयेत्?

दम—रमणीयतरं न वा तत्र न विशेषज्ञास्मि, किन्तु पश्य नातिदूरे वालसहकारतरुं समया पुरुष इवायं दृश्यते, तत् कथमत्र तादृशस्य सम्भावनापि।

कल्प—(दृष्ट्वा विस्मयं रूपयित्वा) अहो एवं सम्वृत्तासि? अद्य न केवलमन्तःकरणे वहिरपि सर्व्वं पुरुषमयं वीक्षसे? कुत्र वा पुरुषो भवत्याः?

दम—(नलदिशमङ्गुल्या निर्द्दिश्य) सखि, अलं विकल्पेन, एष खलु दृश्यते। नाहं मिथ्या वदामि, अपि अहमुन्मत्तास्मि, येनैवमवधारयसि?

कल्प—उन्मत्ता एव, अन्यथा शून्येऽपि सहकारतले किमेवं पुरुषशङ्कामुपलभसे। इदम् अन्तःपुरं परिरक्षन्ति परःशताः सावधानाः प्रहरिणः, अत्र नास्ति प्रवेशः कस्यचन पतङ्गानामपि का कथा पुरुषाणाम्? तदलमद्य समुत्कण्ठाविडम्बनाप्रसूतेन विभ्रमेण।

दम—(आत्मगतं) अये तत् किमहं महति विभ्रमपङ्के पतितास्मि,

अन्यथा कथं कल्पलता तमिमं न वीक्षेत, (प्रकाशम्) सखि, मुग्धास्मि प्रक्षलवृत्ते।

नलः—(आत्मगतं) अहो सन्देहगता दमयन्ती दुःखमास्ते, तदस्याः सख्या अपि दृष्टिमनुवर्त्ते। देवप्रसादात् दमयन्तीसख्या अपि दृष्टिमात्मा मे नातिवर्त्तताम्।

कल्प—(दृष्ट्वा सहसा अपसरति) सखि, दमयन्ति, सत्यमेव ब्रवीषि, पश्याम्येनमपूर्व्वं पुरुषमिदानीम्। तत् कोऽयं कथं वास्य शुद्धान्तप्रवेशः ?

दम—सखि, महदिदं सन्देहपदं वर्त्तते, दूरे च अस्मत्परिजनाः, तदेहि पर्य्याप्तमेतावद्भिरेव कुसुमैरम्बिकापूजनकृत्यम्, अलमनन्तरं कमलसञ्चयेन, यावदितः सुदूरमपसरावः। (इत्यपसरतः)

नलः—भद्रे, अलमस्मत्तो भयेन, नाहं मायावी, परं वृत्तशेषमनन्तरं कथयामि, परिश्रान्तोऽस्मि, एष भवत्योरातिथ्यमभिलषामि, तदिदानीं क्रियतामादौ यथोचितमतिथिसत्कारः।

कल्प—सखि, दमयन्ति, अशक्यमिदमिदानीं परिहातुम्, यतः खलु "आतिथ्यं परमो धर्म्मः" इति शास्त्रविहितः सदाचाराणां मार्गः। तदनुष्ठीयतामनुष्ठेयम्। (नलं प्रति) महाभाग, इदं समार्जितं तीरतरुनिपतितकुसुमालङ्कारसुभगं मलयानिलोपवीजितं शीतलं, शिलातलं, तदत्र उपविश्य परिश्रमं विनोदयतु महाभागः।

दम—(शृङ्गारलज्जां नाटयति)

कल्प—सखि, किमिवसदाभोलेव प्रतिभासि, समाहर पादोदकमस्य अहमित एव दूर्व्वापुष्पफलानि समाहरामि।

दम—(मन्दं गच्छन्ती) अये, को नामायं कन्दर्पसमानरूपः पुरुषः अपि यथाहं चिन्तयामि तथाय स्यात्?

नलः—भवति, अलमनया पर्य्याकुलतया, कृतमातिथ्यं मे सरोवरनीरसम्पर्कशीतलेन शरीरस्पर्शिना एतेन मलयानिलेन, तदिदानीं

मदीये वक्तव्ये भवत्योरवधानं दीयमानमभ्यर्थये ।

कल्प—कथयतु महाभागः दत्तावधाने स्वः ।

दम—(आत्मगतम्) रमणीयमस्य चारित्रं, मन्ये सर्व्वथायं निषध-नाथमनुकुर्व्वीत ।

नलः—इदमादौ पृच्छामि, अपि इयमेव विदर्भराजनन्दिनी, भवती च सखी तस्याः ?

कल्प—सुष्ठु, ज्ञातं महाभागेन ।

दम—(शृङ्गारलज्जां नाटयति)

नलः—कथमेतावन्ति कुसुमानि भवतीभ्यां संगृह्यन्ते इति न चेद्रहस्यं श्रोतुमिच्छामि ।

कल्प—आगामिदिवसे सख्या मे स्वयंवरमहोत्सव इति अद्य अम्बिकायाः पूजनार्थम् ।

दम—प्रगल्भे, अम्बिकायाः पूजनार्थमित्येतावन्मात्रमेव न किं पर्य्याप्तमुत्तरदाने ? कथं यावदेव विवृणोषि ?

नलः—अथ भवत्यौ सहसा मामिह पुरुषमदृष्टपूर्व्वमालोक्य नूनं विस्मयं प्राप्ते ?

कल्प—महाभाग, अथकिम् ।

नलः—अलमत्र विस्मयातिशयेन ।

कल्प—कथमिव ?

नलः—श्रूयताम्, अहं प्रहितः पुरन्दरहुताशवरुणपितृपतिभिर्दैवै-स्त्वदीयां सखीं प्रति दूतरूपेण । तैरेव च शुद्धान्तप्रवेशमनुकूलयितु मन्तर्द्धिविद्या मे दत्ता । तत एव आदावदृश्यः शुद्धान्तं प्रविश्य अनन्तरमिच्छामात्रेण भवत्योरक्षिगोचरतां प्राप्तोऽस्मि ।

उभे—भगवन् अभिवादये । भवति मानुषबुद्ध्या कृतमपराधं कृपया आवयोः क्षन्तुमर्हसि । (प्रणमतः)

नलः—भद्रे, अलमनया मयि दैवतबुद्ध्या, नाहं देवः, परं देवानां दूतरूपेणोपस्थितो मानुष एवास्मि । तदिदानीं देवादेशमाकर्णयितुमर्हसि ।

उभे – किममी समाज्ञापयन्ति ?

नलः—इदं विज्ञापयन्ति, यथा—

> कालादुदञ्चः प्रभृति सातिशयं भवत्याम्,
> रागो महान् भवति मानसमन्दिरे नः ।
> अस्माकमद्य न ततोऽमृतलब्धिरास्ते,
> त्वत्प्राप्तिरेव परमा प्रतिभाति बाढम् ॥

दम – (अक्षिभङ्ग्या सखीम् उत्तरदानाय नियोजयति)

कल्प—महाभाग, प्रियसखी मे विदर्भराजनन्दिनी देवतानामीदृशं भणितं परमप्रसादमेव सम्मन्यते । श्रुतञ्च तथा तथा बहुश एव दूतीजनानां मुखनिःसृतं वस्तु । नूनमिदं शुभादृष्टमेव निदानयति यदहो देवतानामीदृशं करुणापरत्वं नाम । को वा न तस्मै स्पृहयति ?

दम—(जनान्तिकम्) असम्बद्धभाषिणि किमिदं ब्रवीषि ? अपि मुग्धासि त्वं कारणान्तरेण ?

कल्प—सखि, अलं कल्पलताया मनोरथविपरीतप्रदानाशङ्कया, विरम्यताम्, आलोक्यतामधुना कृत्यजातं ते सखीजनस्य ।

नलः—सूक्तमिदं वैदर्भीप्रियसखीजनोचितम् । को वा देवानां महिमानं न जानीते । नद्द भद्रे, तथा प्रयतस्व यथा आगामिदिवसे स्वयंवरसभामुपगतेषु देवदानवगन्धर्वयक्षराक्षसनागनरेषु अन्येषु च रसिकभावं गतेषु सर्वतः समुत्कर्षेण भवत्याः प्रियसखी पुरन्दरहुताशनपितृपतिवरुणानामेकतमं वरणस्रजा बहुमन्येत, तेन हि देवताप्रीतिसम्पादनहेतुकः परमपुण्यलाभः, स्वस्य च सुतरां सुखसम्भोग इति द्वयमेव काम्यभूतं निष्पद्येत । तदियं शुभैव ते वचनपरिपाटी । (हर्षं नाटयति, दीर्घञ्च निश्वसिति)

कल्प—महाभाग, प्रियसखी मे व्याहरति, यत् जानामि देवाना-मीदृशं समुत्कर्षं, किन्तु अन्यत्र संक्रान्तहृदया कथमन्यत्र वरणस्रज-मर्पयेयम् ? शास्त्रविपरीतमिदमार्य्यनारीणाम्, जानन्त्येव सर्व्वं सर्व्व-मनोरथदर्शिनो देवास्तथापि किमेवं मामद्य विड़म्बयन्तीति ?

नलः—भद्रे सर्व्वमनोरथदर्शिनो देवा इत्यत्र को वा सन्देहः ? तथापि स्वाभिलषितलाभाय यदिमां पुनः पुनरेव याचन्ते तत्र प्रभावः कामस्यैव । तत् परिपूरयतु ते प्रियसखी देवानां मनोरथम् । सफलतामेतु वसुधायां तस्या नारीजन्म । पश्य

अनन्तजन्मार्जितपुण्यसम्पदा तपस्विनो विभ्रति यत्र कामनाम् ।
स्वर्गः स एवाद्य करे भवत्सखीं स्वयं समाकर्षति किं निवर्त्तते ॥

दम—सखि, अभिवाद्य महाभागं देवप्रनिधिं विज्ञापयस्व, काहं कामिनी देवानात्मना पर्य्युपासितुम् ? यदि मे दयावन्तो देवाः तदभ्यर्थये कृताञ्जलिबन्धा यथा दीयतां मयि करुणया मनोरथ-फलमिति ।

नलः—राजनन्दिनि, सत्यमेव दयावन्तस्त्वयि देवाः, अन्यथा कथं सर्व्वसुखसारं स्वर्गमपि अनुभावयितुमयं प्रयत्नः स्यात् ? तद् भद्रे न केवलं भवतीं प्रति करुणैव परन्तु भवतीमधिकृत्य नित्यमेव तथा तानुन्मादयति भगवान् मानसजन्मा यथा त्वदीयलाभमन्तरेण नास्ति तेषामन्यो मानसशान्तेरभ्युपायः, तदलं निर्ब्बन्धातिशयेन ।

दम—सखि, जानामि, यत् मां प्रति सुतरामनुरज्यन्ति पुरन्दरादयो देवाः, तथापि यदि तेषामन्यतमं वृणुयाम्, तेनापि परेषां वयाणां न मानसतोषः, तथा कृतेऽपि यदि न शक्यो देवकोपः परिहार्तुं तदा कथं मया परिहीयतां नारीधर्मः ।

कल्प—महाभाग, युज्यते सूक्तमिदं प्रियसख्याः, तदत्र कीदृश-मुत्तरमुपादीयताम् ?

नलः—भद्रे, कोदृशमत्र नारीधर्मपरिहाणम्? अपि न जानाति भवती रुक्मिणा शिशुपालाय कल्पितां रुक्मिणीं भगवता नारायणेन विक्रम्य गृहीताम्।

दम—सखि, कथय, जानामि तथा रुक्मिणीं किन्तु तत्र रुक्मिणी नारायण एव बद्धरागासीत्, तस्याः पिता भीष्मकोऽपि नारायणाय एव कन्यां दातुं स्पृहयाञ्चकार, तत् कीदृशं मया सह तस्याः साम्यम्?

कल्प—महाभाग, प्रियसखी ब्रवीति अहमन्यत्र आवर्जितहृदया, सा तु शिशुपाले न तथेति।

नलः—भद्रे, कौमारचापलाद् वा क्षणिकप्रकर्षदर्शनविड़म्बनाद्वा हीनेऽपि कदाचित् कुमारीहृदयं यदि प्रवर्त्तेत तत्र कीदृशं प्रतिविधानम्?

दम—तत्र तु हीनस्यापि परिग्रह एव कर्त्तव्यतापथमुपास्ते।

नलः—अथ तत्र तदा दुरन्त एव परिणामः।

दम—तत्तु दुरदृष्टप्रसूतमनतिक्रमणीयमेव।

नलः—अथ का वा स्वेच्छया दुरदृष्टफलं कामयते?

दम—स्वेच्छया दुरदृष्टफलमकामयमानापि न कुमारी धर्ममतिवर्त्तते।

नलः—राजनन्दिनि, अथ पृच्छामि यदि देवताविरोधिनी नरमेव कामयमाना स्वयंवरणप्रवृत्ता भवती भवेत् तदा किं देवता अपि निर्विरोधं वर्त्तिष्यन्ते, कोपकषायिताः स्वयंवरणव्यापारमेव ते विघटयिष्यन्ति।

दम—करुणापरा नाम देवाः स्वभक्तेषु, यद्यहं तेषु चिरं भक्तिमती तत् कथमेवं ते कुर्व्वताम्?

नलः—राजनन्दिनि, मुग्धासि, कुतः?

कामिनाहृतचित्तानां स्वभावविलयो यदि ।
तेषां सर्व्वा विपर्य्यस्ता कृत्याकृत्यविचारणा ॥

तदनङ्गसङ्गविमुग्धानाममीषां भक्तिप्रवणायामपि भवत्यां स्वाभिलषितसिद्धिमन्तरेण कुतो दयापरत्वम् ?

दम—सखि, कथयामि, यदि देवानामेकान्तिकमिव नैष्ठुर्य्यं परिलक्ष्यते, तदा मरणमेव वरं मन्यमाना स्वजीवनं परित्यजेयम्, येन पतिव्रताया मे न व्रतहानिकृतो दोषः ।

कल्प—शान्तं पापं शान्तं पापं प्रतिहतममङ्गलं प्रियसख्याः ।

नलः—अथ राजनन्दिनि, पृच्छामि भवतीं, यदि त्वं मनोरथमलभमाना मरणमेव भवतो वृणुयात्, तथापि किं शक्यः परिहातुं देवाधिकारः ।

दम—कथं वा न शक्यताम् ?

नलः—भद्रे, पश्य,—

उद्बन्धनेन मरणं काम्यते यदि भाविनि !
शून्याधिकारो भगवान् वासवो विजयं गतः ॥

दम—कथमुद्बन्धनेन, पतिव्रताभिः सुचिरं समाचरितं चन्दनशीतलायमानमनलमेव प्रविश्य तथा कुर्य्याम् ।

नलः—आपातदर्शिनि राजनन्दिनि,

प्रविश्य वह्निं यदि मृत्युकामना
तथापि हंहो जितमेव वह्निना ।
चिराय चित्ते प्रथमोपकल्पिता
वह्निर्यदालिङ्गितुमाप्यते प्रिया ॥

दम—अलं वा वह्निप्रवेशेन, तरङ्गशतव्याकुलामुपगत्य तरङ्गिणीमात्मनिर्वृतिं विधास्यामि ।

नलः—राजदारिके, किमत्रापि निरुपद्रवासि ?

पश्य—तरङ्गिणीं यदा गत्वा परिहातुं स्वजीवनम्।
वारिनाथो हि वरुणो वृतः स्वेच्छावशात्त्वया॥

तदलमद्यापि निर्बन्धेन, सुपथि प्रवर्त्त्यतामात्मा।—

दमयन्ती—एवमपि शक्या विषेणापि जीवनलीला निर्व्वापयितुम्।

नलः—मुग्धे, राजनन्दिनि, महान्तमेव विभ्रमं गतासि, यदिदानीमपि नात्मनोऽहितं हितञ्चावगच्छसि।

पश्य—यथा कथञ्चिन्मरणे समाश्रिते,
क्व धर्म्मराजस्य करात् विमुच्यसे।
मृतामपि त्वामु गत्य धर्म्मराट्,
कृतार्थभावं ननु मंस्यतेतराम्॥

दम—सखि, सखि, अशरणास्मि, तदवलम्बस्व माम्, ( मूर्च्छति )

कल्प—( दमयन्तीमवलम्ब्य ) सखि, समाश्वसिहि समाश्वसिहि, महाभाग, किमिदं अनुष्ठितं पौरोभाग्यम्, यदि नाम एषा राजदारिका अनेन वृत्तान्तेन विपद्येत, तत् किं प्रथिष्यते भगवतां देवानां महिमा ? एष ते अञ्जलिः, मा पुनरिमां समुद्वेजय देवसम्बन्धिनीभिः कथाभिः। सखि, समाश्वसिहि। अहो अद्यापि सखी नोच्छ्वसिति! महाभाग, किं नु पश्यति भवान् विस्मयेन परिहाय नैष्ठुर्य्यं राजदारिकां प्रति करुणामास्थाय अदूरवर्त्तिनः कमलसरोवरात् पद्मपलाशपुटकेन सलिलमानीय समुज्जीवयतु मे प्रियसखीम्।

नलः—भद्रे अलमावेगेन, एष सलिलाहरणाय प्रतिष्ठे, त्वमपि राजदारिकामुज्जीवयितुं वसनान्तेन वीजयस्व, यथेयमचिरादुद्बुद्धा भवेत्। ( गच्छन् ) अहो सत्यमतिनिष्ठुरोऽस्मि, अन्यथा कथं तथा निर्व्वन्धवतीमपि राजदारिकां तथा सुतरामनुरुन्धे, तद् यथास्या दृढ़तमो निर्बन्धस्तथा मन्ये विफलो

मे दौत्यनिष्पादनप्रयत्न इति। भवतु सत्वरं सलिलमाहृत्य समुज्जीवयाम्येनाम्। ( निष्क्रान्तः )

कल्प—सखि, सखि, समाश्वसिहि, समाश्वसिहि।

दम—( लब्धसंज्ञा ) सखि, कुत्राहं वर्त्ते ?

कल्प—सखि, अपि न स्मरसि, विलासोद्याने वर्त्तसे।

दम—अपि प्रस्थितं देवदूतेन ?

कल्प—तेन हि भवत्याः समुज्जीवनाय कमलसरोवरात् सलिलाहरणाय प्रस्थितम्।

दम—सखि, अलमद्य तथानुबन्धेन, प्रत्यावृत्तमिनं विज्ञापय, यथा पुनरसौ देवविषयिण्या वार्त्तया मां नोद्वेजयेत्, अन्यथा अनिच्छन्तीमपि मां स्मरणीयामिव मन्यस्व। एवञ्च विज्ञापय यथा दमयन्ती निषधनाथसंक्रान्तहृदया नालं कथमपि देवान् वरीतुमिति।

( पुनः प्रविशति पद्मपत्रे सलिलमादाय नलः )

नलः—भद्रे, इदं तत् सलिलं, उपचर्य्यतामनेन ते प्रियसखी, (स्वगतं) अहो दिष्ट्या स्वत एव समुच्छ्वसिता तत्रभवती। तदपगतकलङ्कोऽस्मि।

कल्प—( सलिलमादाय दमयन्त्या मुखनयने सिञ्चति ) सखि, अपि प्रकृतिमापन्नासि ?

दम—अथ किम्। सखि, शीतलं सरोवरसलिलं कस्य वा जीवनं न परितर्पयति। ( शनैरुत्तिष्ठति )।

नलः—भद्रे, कार्य्याभियोग एव अस्मानेवं दशायामपि पर्य्याकुलयति, तदेष देवानामन्तिकं गत्वा कथं विज्ञापयेयम् ?

कल्प—महाभाग, सखीहृदयमनुवर्त्तमाना वदामि, यथा पवं देवेषु विज्ञापनीयं यदियं निषधनाथसंक्रान्तहृदया कथमपि नालं तस्मादन्यं वरणस्रजा वा चित्तेन वा वरीतुमिति, तत् प्रसी-

ददन्तु मे प्रियसख्या देवाः, यथेयमचिरादेव स्वमनोरथं समासादयेत्।

नलः—भद्रे, किञ्चिदपरमपि विज्ञापयितुमिच्छामि।

कल्प—आज्ञापयतु महाभागः किमिति?

नलः—एतद् विज्ञापयितुमिच्छामि, यथा निषधेश्वरः पुरन्दरश्च इत्येतयोः प्रथमस्य वरणे कियन्तमेव कालं सुखसम्भोगः, द्वितीयस्य वरणे तु सुचिरं यावत्। संसारे सुखसम्भोगाय स्पृहयन्तो जीवा जीवन्ति, तद् गुरुलाघवविचारेण किमिति भवत्याः प्रियसखी नैव विमलां सिद्धान्तशय्यामधिशेते?

दम—सखि, कल्पलते, विज्ञापयस्व देवदूतं, यथा तथा वा भवतु, सर्वथा निषधेश्वर एव मे जीवितेश्वर इति।

नलः—भद्रे, दृढसंकल्पासि, तद् भवतु गत्वा मया त्वद्वचनेनैव देवा विज्ञापनीया, तथा च मया प्रस्तोतव्यो यत्नपर्यायः, येन तुभ्यं न ते कुप्येयुः, तदेष प्रतिष्ठे, अचिरादस्तु ते मनोरथलाभः। (स्वगतम्) अहो सम्मिश्रितां भावद्वयीमाश्रितोऽस्मि। तथाहि—

देवानां दूतकृत्ये फलविरहवशादस्मि खिन्नान्तरात्मा,
वैदर्भी पूर्णरागा मयि परमतया तेन यातोऽस्मि हर्षम्।
मत्तः शुभ्रांशुवंश्यात् प्रथममियमभूत् प्रार्थिनां कार्य्यहानि,
लोकातीता कुमारी विलसति सुचिरं काम्यसौभाग्यसारः॥

(निष्क्रान्तः)

दम—सखि, क एष देवदूतः स्यात्?

कल्प—न खलु अवधारयामि, नूनं कश्चन महापुरुष एव, अन्यथा किमिवं विकारहीनं मधुरञ्च व्याहर्त्तुं जानीयात्?

दम—अहन्तु मन्ये स एवायमिति।

कल्प—कथं मन्यसे?

दम—तद्गतमेव हृदयं मे व्याहरति ।

कल्प—यद्येवं स्व एव अवगन्तासि । तदेहि यावत् । इदानीमम्बिका-गृहं गच्छावः ।

दम—एवं, गच्छावः । ( निष्क्रान्ते )

द्वितीयाङ्कः समाप्तः ।

---

## तृतीयाङ्कः ।

( ततः प्रविशति गृहीताध्वगवेशो विदूषकः )

विदू—(स्वगतम्) अहो देव्या दमयन्त्या समादिष्टः तस्याः बान्धवानां सन्देशमादाय कुण्डिनपुरात् प्रत्यावृत्तोऽस्मि । अथ कीदृशो देव्या दमयन्त्या विवेकः, राजपुरे विद्यमानेष्वपि तुरङ्गमादिषु नानाविधोपकरणेषु किमिति पादचारिणैवाहं सम्प्रेषितः ? तत् किं ब्राह्मणानां परिश्रमो न परिश्रम एव, तद् भवतु अद्य गत्वा विशेषेण अनुयोक्तव्या देवी दमयन्ती, कथं ब्राह्मणस्य मे पथिश्रमापनयनाय न यानमादिष्टवतीति । अथवा स्वयमेव अत्र अहमपराध्यामि, यतो मदर्थं तदानीं सुसज्जित-मपि यानं स्वस्य सामर्थ्यातिशयं प्रत्याययितुं यानस्खलन-शङ्कया च स्वयमेव अपाकृतवानस्मि । तदलमिदानीमनु-शोचनया । अहो रमणीयतमं नाम देव्याः दमयन्त्याः पितृपुरं, रमणीयप्रकृतयश्च सर्व्वं एव तत्रत्या राजपरिजनाः, येन समु-पस्थितमात्रे मयि तत्र सुमधुरस्वागतभाषितेन सम्भाष्य राजसहोदरोचितं स्नानभोजनादिकं मया कारितवन्तः । महाराजो भीमोऽपि स्वयमेव मां करे गृहीत्वा अन्तःपुर-

सौन्दर्य्यादिकं सर्व्वमेव समदर्शयत्, अपगतश्च तेन तेन साधु समाचरितेन सर्व एव मे पादचारप्रभृतिसम्भूतः परिश्रम-पर्य्यायः। तदेतत् सकलमेव समादरातिशयं नलस्य प्रियवयस्यतया एव सम्भावयामि। महानेष प्रियवयस्यो मे नलो नाम, यो हि तदानीं देवानां दूततामङ्गीकृत्य दमयन्त्या देववरणाय भूयांसमायासं कृत्वा यावत् विफलकामो जातस्तावदेव देवसमीपमुपसृत्य सर्व्वमेव यथायथं प्रकाश्य देवानुमत्या स्वयंवरसभामुपगतवान्, उपगते च तस्मिन् दमयन्तीमन्यथापि परीक्षितुकामा देवा नल—सदृशाकारं परिगृह्य यदा भैमीं भ्रामयामासुः, तदैव तया साग्रहं याचिता नले प्रीतिमन्तश्च स्वं स्वं लक्षणं प्रकाशयामासुः, वृतस्ततो दमयन्त्या मे प्रियवयस्यः, आकाशाच्च पतिता प्रभूतपुष्पवृष्टिः, दत्तवराः प्रस्थिताः पुरन्दरादयो देवाः। ततः प्रभृति सुचिरं दाम्पत्यसुखसम्भोगेन वर्त्तते किल द्वन्द्वम्। किंनु महत्त्वमन्तरेण त्रिभुवनकाम्या दमयन्ती देवानवधूय तमेव वृणुयात् ? देवाश्च ततोऽपि परितुष्टाः स्युः ? (नेपथ्याभिमुखं दृष्ट्वा) अये, किमिदम् ? एते वाष्पधारापरिप्लुतवदना राजपरिजनाः प्रजाश्च राजतोरणे विषादमनुभवन्तस्तिष्ठन्ति: अदूरे च तेषां प्रियवयस्यो मे निषधेश्वरः, महादेवी च दमयन्ती तोरणाद् बहिरुपसर्पतः, तत् किन्नु खलु इदम्। परिकम्पते मे हृदयं वयस्यस्य अमङ्गलाशङ्कया तत् किमिदं स्यात् ? भवतु एनं विश्वावसुं पृच्छामि, (आकाशे) भद्र विश्वावसो, किमेवं दुःखेन वर्त्तसे, अपि न किञ्चिदत्याहितम् ? किं कथयसि ? महदत्याहितमिति, कथमिव ? किं ब्रवीषि ? प्रियवयस्यो मे निषधेश्वरः पुष्करेण द्यूते विनिर्जितो वनाय प्रतिष्ठते, सह च तत्रभवती विदर्भराजनन्दिनीति,

हा हतोऽस्मि मन्दभाग्यः, वयस्य निषधेश्वर, प्रतिपालय मां यावदहमपि त्वया सहैव गच्छामि। ( निष्क्रान्तः )

( ततः प्रविशतः पुष्करः कलिश्च )

कलिः—वयस्य, पुष्कर, किमिदं न पश्यति भवान् ? युवयोरभिन्नावेव पितरौ, कौलीन्यमपि समानम्, तत् कथं तेन नलेन राज्यमुपभुज्यतां, त्वया च सम्मुखप्रवाहिनि महानदीप्रवाहे, पिपासाक्षामकण्ठेन कष्टधारा अनुभूयताम् ? एतदर्थमेव चिरात् मया द्यूतकृत्ये नियोजितोऽसि। अथ इदानीं द्यूतविनिर्जितं साम्राज्यं किमु मया भोक्तव्यम् ?

पुष्करः—वयस्य, किंवा कथयामि, महता सौभाग्येन सम्प्राप्तो मया भवानकृत्रिमो बान्धव,—

कृत्रिमाः सुहृदो लोके दुर्लभा न कदाचन।
एकोऽप्यकृत्रिमो बन्धुर्भुवनेषु सुदुर्लभः॥

कलिः—तदिदानीं कृतकृत्येन भवता मदनुगतेन भवितव्यम्।

पुष्करः—वयस्य, कथमिदानीमेव, यावदेव मया ते साक्षात्कारः कृतः, यावदेव त्वया द्यूते विनियोजितो नलं जितवानस्मि, यावदेव च सर्व्वमिदं वसुधाराज्यं द्यूतेनायत्तीकृतवानस्मि तावदेव तव दासतामङ्गीकृतवानस्मि, वयस्य त्वमेव मे कारणं साम्राज्यश्रीलाभस्य, तत् सुचिरमनुगतो दासजनोऽयं विनियुज्यताम् यथेष्टमेव स्वकृत्येषु, त्वमेवास्य साम्राज्यस्य नायकोऽसि, केवलमहं ते प्रेष्यभूतो नियोगमपेक्षे।

कलिः—यद्येवं तदादिश्यन्तां ते साम्राज्यवर्त्तिनो जनाः —

गावो देवगणाश्च भक्तिविहितां पूजां न गच्छन्त्वमी,
क्षीणो धर्म्मविधिः प्रयातु विलयं सौहार्दमुच्छिद्यताम्।
वार्त्तापि त्रिदिवस्य नश्यतु चिरं योगैषणा लुप्यताम्
विप्रेषु प्रियतान्यजातिजयिनी माभूत् क्षितौ लक्षिता।

अपि च, वेदेषु प्रणयो विनश्यतु नयः शास्त्राद् बहिर्वर्त्तताम्,
ये शास्त्रं रचयन्ति तेऽपि मनुजा नैतेऽपि किं तादृशाः?
यस्मै यद्धि विरोचते जनिमते तेनैव तत् साध्यताम्,
कालं कञ्चन देहसङ्गतिरियं काम्येन संयोज्यताम्॥

पुष्करः—यथाज्ञापयति प्रियवयस्यः।

कलिः—वयस्य पुष्कर, गच्छाम्यहमिदानीं द्रष्टुं सदारस्य भ्रष्टराज्यस्य नैलस्तकस्य अरण्यगमने कियान् पन्था इति, तस्मिदानीं त्वमपि स्वनियोगमनुतिष्ठ।

पुष्करः—यथादिशति वयस्यः।

कलिः—(गच्छन् आत्मगतम्) अहो मे प्रभावः! कियन्त एव मे क्षणा व्यतीता नलस्य प्रभावं पराभवितुम्, यावदेव मदेकसम्बलस्य मोहस्य प्रभावेण परित्यक्तवानेष शारीरशुद्धिं, तावदेव लब्धावसरेण देहमस्य प्रविश्य धर्म्यां बुद्धिं लघूकृत्य द्यूतमार्गेणैष राज्याद् भ्रंशितः। मूढ़े, दमयन्ति, देवानवधूय मानुषं वृखती देवकोपादपि न भीतासि, अहो साहसं, सम्प्रति पश्येयं कीदृशस्ते फलानुबन्ध इति। मूर्ख, धर्म्म, परिरक्ष साम्प्रतं वनाय प्रतिष्ठमानं भ्रष्टराज्यं स्वानुगतं निषधनाथम्। क्व साम्प्रतं ते गर्वः? किमु नावलोकयसि स्वानुगतस्य जनस्य वर्त्तमानमवस्थापातम्? तदाकर्णय यन्मया अपरमपि करिष्यते।—

भैमीं वियोजयिष्यामि नलेनाज्ञातबुद्धिना।
उभयोर्दास्यमाधास्ये प्रभावस्ते विलुप्यते॥

(निष्क्रान्तः)

पुष्करः—अहो अकारणबान्धवो मे प्रियवयस्यः, एतस्मादन्यः को वा सहायो मे साम्राज्यलाभे? तद्भवतु सम्प्रति वयस्यादेश-

मनुतिष्ठामि। कः कोऽत्र भोः! अये न कोऽपि? तत् कोऽदृशोऽयं प्रबन्धः? भवतु उच्चैराह्वयामि, (उच्चैः) कः कोऽत्र भोः!

(प्रविश्य यष्टिहस्तः खञ्जः पुरुषः)

खञ्जः—आज्ञापयतु देवः।

पुष्करः—अरे! क्व ते परिजनाः? किं मे त्वया खञ्जपुरुषेण?

खञ्जः—देव! सम्प्रति भवतः खञ्जपुरुषैरेवार्थः।

पुष्करः—कथमिव?

खञ्जः—यतस्ते दूरं गन्तुमसमर्थाः।

पुष्करः—किन्तेन?

खञ्जः—देव! अद्यापि नावधारयसि?

पुष्करः—किमिदमसम्बद्धमभिधत्से? स्पष्टं कथय।

खञ्जः—देव! इतोऽपि स्पष्टतरं कथनीयम्? यद्येवं श्रूयताम्।— येषामतिकष्टेनापि दूरे चरणसञ्चारसामर्थ्यं, ते किमद्यापि सन्ति निषधेषु?

पुष्करः—तत् कुत्र?

खञ्जः—ते हि देव्या दमयन्त्या देवेन च नलेन सार्कं वनायैव प्रतिगताः।

पुष्करः—किमत्र न कोऽपि?

खञ्जः—अथ किम्?

पुष्करः—गृहीतराज्यभाराः सचिवाः?

खञ्जः—त एव प्रथमं सहचारिणः।

पुष्करः—साम्राज्यस्तम्भभूताः सेनापतयः?

खञ्जः—कुतोऽद्य तेषां वार्त्तापि?

पुष्करः—अन्ये विभवतः परीवाराः ? शान्तमतयः प्रजाश्च ?

खञ्जः—तेषामपि सम्प्रति नलानुवृत्तिरेव प्रतिष्ठा ।

पुष्करः—( स्वगतम् ) अहो मूर्खता ! अहो मतिविपर्य्ययो जानपदानाम् ! अस्तु समग्रमेव राज्यं पर्य्याकुलं, तथापि मदेकबान्धवेन कलिना सुपरीक्षितार्थोऽस्मि । तदलमाशङ्कया ; अरे पद्मपाद, गच्छ मद्वचनाद् विज्ञापय शेषान् जानपदान् तदनुगतान् परीवारांश्च ।—

खञ्जः—किमिति ?

पुष्करः—गावो देवगणाश्च भक्तिविहितां पूजां न गच्छन्त्वमी,
क्षीणो धर्म्मविधिः प्रयातु विलयं सौहार्द्दमुच्छिद्यताम् ।
वार्त्तापि त्रिदिवस्य नश्यतु चिरं योगे मतिर्लुप्यतां,
विप्रेषु प्रियतान्यजातिजयिनो माभूत् क्षितौ लक्षिता ॥

अपि च—

वेदेषु प्रणयो विनश्यतु नयः शास्त्राद् वहिर्वर्त्ततां,
ये शास्त्रं रचयन्ति तेऽपि मनुजा नैतेऽपि किं तादृशाः ?
यस्मै यद्धि विरोचते जनिमते तेनैव तत् साध्यतां,
कालं कञ्चन देहसङ्गतिरियं काम्येन संयोज्यताम् ॥

खञ्जः—( स्वगतम् ) हन्त विलीनो निषधाधिकारः ।

पुष्करः—किमिति जोषमास्यते ?

खञ्जः—देव ! खञ्जोऽस्मीति जानपदेषु देवादेशं विज्ञापयितुं गतिं चिन्तयामि ।

पुष्करः—धिङ्मूर्ख ! राजपुराद् बहिर्गत्वा समुच्चैरिमम् आदेशं निवेदय, तेनैव वक्तृपरम्परया खल्वयमर्थः प्रचरिष्यति । तद्गच्छ ।

खञ्जः—अहो विवेकवैचित्र्यं देवस्य ! कथमन्यथा कनीयानपि

ज्यायांसमतिक्रम्य साम्राज्यं लभेत ? तदेष देवादेशपरिपालनाय गच्छामि । ( निष्क्रान्तः )

पुष्करः—गतः खलु पञ्चपादो जानपदेषु ममादेशं प्रचारयितुम्, तत् किंवा जानपदाः प्रतिपद्येरन् ? अपि ममाज्ञां निर्विचारमेव स्वीकुर्य्युः ? यदि ते वैमत्यमाश्रयेरन् तदा नूनमेषोऽहं—

क्रोधवाड़वहुताशतेजसा
सर्व्वतः क्षितिमिमां विदाहये ।
पुष्करः कुपितभावमीयिवान्
केन वा सपदि नीयतां शमम् ?

( ततः प्रविशति गायन् विवेकः )

विवेकः— नवनिषधेश्वर सितकरकुलधर
खलतां परिहर वह बहुमानम् ।
नलकृतिमनुसर पुण्यसमादर-
तत्परमन्तरमधिकुरु यानम् ॥
मायाविलसितमिदमविलम्बित-
मपनय सञ्चितमविशदभानम् ।
धनजनसदनं संसृतिगहनं
न खलु चिरं कुरु विमलविधानम् ॥

पुष्करः—क एष भोः !

वस्ते गैरिकमेकमेव वसनं ग्रीवाग्रबन्धस्थिरं
शीर्षालम्बिसुदीर्घकेशविलसत्पृष्ठप्रभोद्भासिता ।
मूर्त्तिः कामपि कान्तिमिति परमां पूतां विनीतामिव,
हंहो किन्नु ममापि चेतसि नवं भावं मुहुर्यच्छति ॥

विवेकः— कलिरतिखलतां जनयति हृदि तव
कुरुते हतमिह सुकृतवितानम् ।

चेतय हृदयं पालय विनयं
पुण्यसरणिमनु कुरु पददानम् ।
सितकरकुलधर खलतां परिहर
नलकृतिमनुसर वह बहुमानम् ।
धनजनसदनं संसृतिगहनं
न खलु चिरं कुरु चिरमवधानम् ॥

पुष्करः—अये सुधायते सङ्गीतकमिदं मे श्रवणयोः, अथ किमसारं सर्व्वमेविदं संसारे ? तत् किं स्वार्थमभिसन्धाय परे प्रतार्य्यन्ते ? क्षणभङ्गुरस्य विग्रहस्यार्थे किमिति वा अन्ये विगृह्यन्ते ? तत् किं राज्यमधिकृत्य धर्म्मव्रतं पुण्यश्लोकं नलं पराभूय सुतरामन्याय्यं कृतम् ? हा धिक् कष्टं ! लोभपराधीनेन मया विस्मृता हन्त कृत्याकृत्यविचारणापि ! हा हतं ! मूषितोऽस्मि मन्दभाग्यः ! नितरां विमूढ़ोऽस्मि ! अन्यथा को वा अहमिव ज्यायांसं राज्यादपवाह्य सिंहासनमभिलषेत् ? तदलं मे राज्येन, वनं गत्वा सम्प्रति देवं नलं प्रसाद्य निषधेषु प्रत्यावर्त्तयेयम् । ( गन्तुमिच्छति )

( ततः प्रविश्य कलिः )

कलिः—वयस्य, पुष्कर, क्व गन्तासि ?

पुष्करः—( निरुद्धप्रयत्न इव ) अये प्रियवयस्यो मे कलिः प्राप्तः ? वयस्य, स्वागतम् ? आस्यताम् ।

कलिः—अलमत्यर्थेनोपचारेण, कथय क्व गन्तासि ?

पुष्करः—यत्र आर्य्यो मे नलः प्रस्थितः ।

कलिः—कथमिव ?

पुष्करः—पुनस्तं निषधेषु प्रत्यानेतुम् ।

कलिः—धिङ्मूर्खं ! किमेवं प्रलपसि ?

पुष्करः—वयस्य, कथमिदं प्रलपितं नाम ? ज्यायांसमतिक्रम्य

साम्राज्यसम्भोगं पापमेव शास्त्रकाराः समामनन्ति, तत् कथमिदं पुष्करेण समाश्रीयताम् ?

कलिः—धिङ्मूर्ख ! अद्यापि नापगतस्ते भ्रमान्धकारः, श्रूयतामिदं तत्त्वम्—

धूर्त्तानां मतिदुर्विलासरचना पापञ्च पुण्यञ्च यत्,
किं साक्षादनयोरिहास्ति निपुणः कश्चित् परीक्षाकरः ।
यावद्देहमुपासते सुखचयं प्राणैः परैर्देहिनः
देहादुत्तरमस्ति नैव किमपि प्राप्तव्यमव्याजतः ॥

तदलं पापपुण्यवार्त्तापरिचिन्तया, यावद् यावदैहिकः सुखसम्भोगस्तावदेव प्रवर्त्त्यतामात्मा ।

पुष्करः—वयस्य, भीतोऽस्मि ।

कलिः—कस्मात् ?

पुष्करः—प्रतिकूलवर्त्तिनो दैवात् । पुष्करस्य प्रतिपदमेव प्रतिबध्नाति श्रेयः प्रतिकूलदैवपर्य्यायः, अन्यथा कथं प्राप्तेऽपि राज्ये परिजनशून्यतया श्मशानसाम्यं समुपनतं स्यात् ?

कलिः—हा धिक् ! दैवमिति वार्त्तामात्रविश्रान्तं गगनप्रसूनायितं ! पुरुषकार एव फलं प्रसूते सर्व्वत्र, तत्र तु भवानेव प्रमाणं, तथाहि—

मदर्पितां बुद्धिमुपेत्य शोभनां यदैव पाशैरुपदेवितं त्वया ।
तदैव राज्यं गतमात्मनः करे पुरा न दत्तं किमु दैवबन्धुना ?

भवतु साम्प्रतमेहि, शुद्धान्तं प्रविश्य सदुपदेशपर्य्यायान्तरेण सन्देहं ते लघूकरिष्यामि । ( आकाशे लक्ष्यं बद्ध्वा ) धर्म्म, विवेकेन मां पराभवितुमीहसे ? धिङ्मूर्ख ! अपध्वस्तोऽसि, पश्य कियतीमिव ते दुर्गतिं सन्धारयामि ! ( प्रकाशं ) वयस्य, एहि किंवा विलम्बेन ?

पुष्करः—यथा रोचते वयस्याय।

कलिः—(स्वगतम्) संशयव्याकुलहृदयं पुष्करं बहुधा क्षिप्रमिव समुपदिश्य यावच्छीघ्रं नलमनुसरेयम्। मूढ़बुद्धे नल, गर्वितहृदये दमयन्ति, दुर्जात धर्म्म, न जानन्ति भवन्तः सर्व्वविपर्य्यासिनं कलिमिनम, तदचिरादेव ज्ञास्यन्ति प्रचण्डप्रभावस्य कलेर्विलसितम्। कियानयमारम्भः? परिणतिरस्याः सुदुःसहा एव स्यात्। (निष्क्रान्तौ)

—००—

## विष्कम्भकः

(ततः प्रविशतो गृहीतवनवासिवेशौ नलो दमयन्ती च)

नलः—प्रिये दमयन्ति, सुदूरमतिक्रम्य गभीरां वनलेखां परिप्राप्तौ स्वः। तथाहि पश्य—

दूराद्दूरतरं पलाशरचना लुप्तावकाशान्तरा,
स्तूपीभूतमिवान्धकारगहनं रम्यं तथा भीषणम्।
अस्मिन्नेव वनान्तरे कति कति प्राणैः पणैर्योगिनो,
ब्रह्मण्याश्रितमानसा बहुविधं योगं समातन्वते॥

अपि च—शैलाग्रस्खलदम्बुशीकरचयाभ्यासेन शीतायिता,
शैलोपान्तमही निदाघविषमाप्यास्थानयोग्यायते।
दूरे वाशकपक्षिणां बहुविधो नादः परं श्रूयते,
सत्त्वानां विकटोपनम्रसितं कर्णज्वराय स्थितम्॥

दम—आर्य्यपुत्र सत्यमेव ब्रवीषि, वनभूमिरियं भीतिमिवोपदिशति मानसस्य, तथापि यदृच्छासुन्दरं गहनमवलोकयतः कस्य वा न सन्तुष्यति नूतनभावविमुग्धः अन्तरात्मा?

नलः—प्रिये, अत्रैव प्रवेष्टव्यम्। विस्मृत्य सुचिरन्तनं विलासराज्यं अत्रैव प्रतिभयाकरे जीवनं यापयितव्यमिति सुदुष्करमिदं भवत्या।

दम—आर्य्यपुत्र, किमेवं कथयसि ? त्वया सह अनुभूयमानं दुःखमपि मे सुतरां सुखायते, त्वया विना त्रिदिववासोऽपि मे नरकपरिभोग इव प्रतिभाति । तदलमन्यथा सम्भाव्य ।

नलः—प्रिये दमयन्ति, स्मरामि हन्त स्मरामि,—तदानीं मामधिकृत्य प्रजानामसाधारणीं प्रीतिं, तासु तस्मिन्नवसरे—

हित्वा पुत्रकलत्रबान्धवगणान् पित्र्यं तथा मन्दिरं,
कान्तारं विगणय्य दुःखशरणं तुच्छं महाभीतिदम् ।
हा हा देव किमेष नो न दयसे वाचं ब्रुवाणास्तथा,
दुःखार्त्ता बहुसान्त्ववाग्भिरनघा हंहो निषिद्धा मया ॥

ततोऽपि दुःखतरं यत् मन्दारको मे जीवनसहचारी सुतरामनिच्छन्नपि तदीयपरिजनदुर्गतिमपनेतुं प्रतिबोध्य कथञ्चित् देव ममानुसरणात् प्रतिनिवर्त्तितः । अहो कष्टम् !

आशैशवं मदनुवृत्तिपरं वयस्यं
हित्वा प्रयामि बत दूरतरं प्रदेशम् ।
हा कातरेण मनसा प्रियबान्धवस्य
मन्दारकस्य करुणं रुदितं स्मरामि ॥

दम—आर्य्यपुत्र, किमेवं विषसेन भवता त्वदेकजीवितेयं क्लेशभागिनी क्रियते ? भवानेव मां विकारकाले बहुशः समुपदिष्टवान् यथा "विपदि धैर्य्यं महापुरुषधर्म्म" इति ।

नलः—प्रिये दमयन्ति, न जानासि मे हृदयावस्थां, येनैवं ब्रवीषि । देवि, पश्य—

साम्राज्यं निरुपद्रवं परिजना वश्या यशो निर्म्मलं
निर्व्याजोपनतं मनोरथफलं पूजा प्रजाभिश्चिरम् ।
नैष्ठुर्य्येण विधेरिहाद्य सकलं सद्यो विपर्य्यासितम्
हा कष्टं निजदुर्विवेकलसितं किं दुःखमस्मात् परम् ॥

दम—आर्य्यपुत्र, अलमनया अनुशोचनया। मुक्तसलिलबन्धस्य सरोवरस्य सलिलप्रवाह इव सुखं संसारिणां कदाचिदागच्छति प्रतिनिवर्त्तते च, तदद्य सुखं नष्टं, पुनरेव समागमिष्यति, तदत्र को वा शोकस्यावसरः ?

नलः—प्रिये, जानामि यत् अनुशोचना निष्फलेति, तथापि यैव भवती सुखमात्रभोग्या कुसुमस्पर्शमपि कष्टाय मन्यमाना पुरा राजान्तःपुरे स्थितासीत्, सैवाद्य विधातुः कठोरेण विलसितेन मम च मन्दभाग्यस्य दुरन्तव्यसनेन कान्तारे कष्टमनुभवन्ती वर्त्तते इत्येतदेव मे हृदयं पर्य्याकुलयति।

दम—आर्य्यपुत्र, पुनरपि मामेव मन्दभाग्यामनुशोचसि। प्रियंवद, नाहं त्वया सह विहरन्ती कष्टलेशमपि अनुभवामि। अपि न जानीते भवान्, यत् कमलदयिता तपनसम्पर्केण आतपतापमपि परमं सुखं मन्यते इति।

नलः—प्रिये, नाहं न जानामि यथा सुचिरमविभूता विदर्भराजनन्दिनीति, तथापि कथयामि किमिवं स्वेच्छया प्रतिकूलं पन्थानमालिङ्गसि ? ईदृशे सुविषमे दशान्तरे यदि भवतीमपि दुःखमुक्तामुपलक्षयेयं, तदापि सुतरां शान्तिमनुभवेयम्। तत् देवि, प्रतिष्ठतां भवती विदर्भेषु ; अयमदूरे दृश्यते विदर्भगामी पन्थाः,। अहमेकाकी कान्तारपथेन प्रस्थितः कथञ्चिदात्मानं धारयिष्ये ; यदा च सुमहति कष्टान्तरे पतितो विषण्णो भवेयं, तदा भवतीं दुःखमुक्तामवधार्य्य त्रिदिवानन्दमनुभविष्यामि। तदलमद्यापि विकल्पेन, यावदेहि, भवतीं विदर्भानुपनयामि।

दम—आर्य्यपुत्र, मा तावत्। पतिमात्रजीविताः पतिव्रता भवन्ति, पतिमन्तरेण किं वा सुखाय सम्पद्यते तासाम् ? तदेषाहं पादौ ते शिरसा.परिगृह्णामि। क्षम्यताम् ; अलमन्यथा जल्पनेन।

नल:—प्रिये, किमेवं निर्व्वन्धवती भवसि ? गच्छ त्वं विदर्भेषु ; अन्यथा यावदेव मया सार्कं वनमन्तरा प्रवेच्यसि, तावदेव सुमहत् कष्टं लप्स्यसे। अनुचितदुःखलवायास्ते किमनेन जीवनावसादिना आयासेन ? नूनं तत्र परिप्राप्तां भवतीं पितरौ समासाद्य सुतरामानन्दमनुभवेताम् ; तत् कथमेवं पित्रोरानन्दमुपेक्षसे ?

दम—आर्य्यपुत्र, यद्येवं तत् किं भवानपि तत्र नोपगच्छति ? यदि मे पितरौ तथा विपत्सन्निपाते भवन्तं तत्र मया सह पश्येतां, तदा दुहितृमात्रसङ्गसुखादधिकतरम् आनन्दं विन्देताम् ; यतः स्वजनबुद्ध्या भवान् विदर्भेषु परिप्राप्त इति ;

नल:—देवि, संसारगतिं न जानीषे तत एवं ब्रवीषि, तथाहि पश्य—

विपर्य्यस्ते भाग्ये सुहृदपि विरागं प्रलभते,
विलुप्तः सम्मानो भवति वचसां गौरवलयः।
मनः शङ्कापङ्के पतति सुहृदां सन्निधिविधौ,
वनादन्यत् किंवा शरणमभिलाषस्य विषयः ?

दम—आर्य्यपुत्र, एवं तर्हि ममापि तत्र प्रस्थाने स एव अन्तरायः।

नल:—प्रिये मैवं वक्तुमर्हसि कुतः ?

सुकोमलाङ्गी वनवासदुःखं
सोढुं न शक्तासि सुखोचिता त्वम्।
पित्रोरपत्यप्रणयोपचारै-
स्तत्र ध्रुवं सौख्यशतं लभेथाः॥

शैशवे पितुरावासे पोषिता स्नेहसम्पदा।
विस्मर्त्तुं नार्हसि स्निग्धा यौवने पितृबान्धवान्॥

दम—आर्य्यपुत्र, मा खलु मा खलु। किमेवं पुनः पुनरेव मां मन्दभागिनीं त्वदाशालङ्घनपातके निपातयसि ? अलमद्यापि विदर्भ-

प्रस्थानादेशेन। यथा तथा वा भवतु, नाहं त्वया विना क्षणमपि जीवितुमुत्सहे, तदादिश सुचिराय मां सहैव स्थातुम्।

नलः—प्रिये, न त्वं कथमपि नलहतकं परित्यक्तुमिच्छसि ?

दम—देव, नाहं कदापि पतिं परित्यक्तुमिच्छामि। यतः—
पतिवियोगादनलोऽपि पतिव्रताया अल्पायते, कथमन्यथा पतिवियोगमसहमाना पतिव्रता अनायासमेव अनलं चन्दन शीतलं मन्यमाना तत्र स्वजीवनमाहुतीकुरुते ?

नलः—प्रिये, जानामि ; तथापि किमेवं कथयामि श्रूयताम्, अद्य खलु दुर्दैवनिगृहीतस्य काननमात्रसमाश्रयस्य पुरुषदोषमात्मनः स्मृत्वा स्मृत्वा त्वत्सन्निधानादपि सुतरां लज्जते मे हृदयं, तत् पुनरपि कथयामि

अलं निर्व्वन्धमाश्रित्य विदर्भान् गच्छ सत्वरा।
अनुकूलं तदेव स्यान्मम पित्रोश्च ते शुभे॥

दम—आर्य्यपुत्र, एष ते अञ्जलिः, मा पुनरेवं भण ; वचनन्ते समाकर्ण्य सुतरामहं विभेमि। मत्तोऽपि ते हृदयं लज्जत इति किन्नु खल्विदम् ? पद्मपलाशगतानि सलिलानीव क्षणस्थिराणि वित्तानि, तत्कृते को वा सन्तापः ? पुरुषदोषं स्मरसि ? सोऽपि वा कथं स्यात्, सर्व्वमेव जगति दैवमपेक्षते। दैवेन साम्राज्याधिनायको जातोऽसि, दैवेनैव च पुनस्तस्मादव-रोपितोऽसि ; तदलं सन्तापेन। आवाभ्यां कानने स्थातव्यं, स्वत एव कानने जातानि फलमूलादीनि समाहृत्य तैरेव जीवनं धारयितव्यम्, अतिदूरे संसारकोलाहलात् केवलं त्वदीयेन सुखेन मया मम च परमानन्देन त्वया परमं सुखमनुभवितव्यम्। यदृच्छया लतापादपपतितानि कुसुमानि स्वयं सञ्चित्य निपुणतरं प्रसाधितशरीरा अहं वनदेवी भविष्यामि, त्वामपि तथैव समलङ्कृत्य कुसुमालङ्कारैः प्रत्यहं वनदेवं विधास्यामि।

प्रभाते दिवसावसाने च मधुराणि विहङ्गसङ्गीतानि नूनमावयोः श्रोत्रसुखमुपजनयिष्यन्ति। आर्य्यपुत्र, चिरवाञ्छितमिदं यदि समुपनतं तदलं तत् सावज्ञमुपेच्य। क्रियतामभागिन्यां मयि सदयदृष्टिपातः ; मा पुनरनुसन्धीयतां वियोगवार्त्ता।

नलः—प्रिये, विदर्भराजनन्दिनि, न भूयोऽपि ते कथयिष्यामि विदर्भ-गमनवार्त्तां, किन्तु सुदुष्करं खलु कान्तारप्रस्थानम् भवत्या इति मुहुर्मुहुरुद्वेजयति।

दम—आर्य्यपुत्र, कान्तारप्रस्थानं यदि सुदुष्करं भवति, भवतु ; तथापि यदा प्राणेश्वरो मे पाषाणवन्धुरेण कान्तारपथेन गच्छन् परि-श्रान्तो निदाघप्रकृतिसृष्टस्वेदपरिप्लुताङ्गो वृक्षतले समासीनो भविष्यति, तदाहं यावत् सत्वरं पर्णपुटेन समाहृतैः सलिलैः तं परिश्रमं लघूकृत्यैव शान्तिमनुभविष्यामि। यदा पुनः आकाशस्य मध्यमारूढे दिवाकरे पथिप्रस्थानपरिश्रमेण क्षुधार्त्तो मे जीवितेश्वरः प्रतिपदं गमनवाधां गमिष्यति, तदाहं द्विगुणितोत्-साहा करप्रचेयलतापादपेभ्यः संगृह्य संगृह्य फलानि तैरेव ते क्षुधां निवर्त्तयन्ती त्रिदिवानन्दमनुभविष्यामि। तदलं कान्तार-प्रस्थाने दुःखनिवेदनेन, निःशङ्कमेव मामनुमन्यस्व सह प्रस्थाने॥

नलः—प्रिये, दमयन्ति, न कथमपि निवृत्ता भवसि, तत् का गतिः ?

दम—अहो समुज्जीवितास्मि। आर्य्यपुत्र अनुगृहीतास्मि।

नलः—प्रिये, यद्येवम् अलमिह विश्रामेण। अद्यापि वहुदूरं गन्तव्यं, नाद्यापि समासादिता निषधसीमा, दूरम् अतिदूरं गन्तव्यं, यावदेव नेत्रयोः सञ्चारस्तावदेव गन्तव्यं, तदलं विलम्बेन, क्रूरः पुष्करो यदि आवयोर्गतिं विदित्वा किञ्चिद् इतोऽपि अत्याहितं कुर्य्यात्! तदलमत्र क्षणमपि विलम्बेन।

दम—आर्य्यपुत्र, वत्सेन पुष्करेण किमतःपरमपि अत्याहितं कर्त्तव्यमस्ति ?

नलः—प्रिये, विस्मिता मा भूः । अद्य वत्सः पुष्करः पापेन कलिना समाक्रान्तः । राजपुरात् काननप्रस्थानवेलायां काचिद-शरीरिणी वागुदचरत्, त्वन्तु तां नाकर्णितवती, केवलं मयैव सा समाकर्णिता ।

दम—कीदृशी सा ?

नलः—श्रूयतां, बहुविधसान्त्ववादैः पौरान् विनिवर्त्त्य यावदेव काननं प्रति आवां प्रस्थितौ, तावदेव वाणी समुदचरत् यथा—

"देवानवज्ञाय विमूढ़भैमी
त्वामाश्रिता तत्र न ते विरागः ।
द्रक्ष्यामि ते भीमसुतानुरागं
कलिः क्रुधा किं न विधातुमीष्टे ॥

मन्मायया पुष्कर एष मुग्धः
मन्मायया द्यूतकृतौ जितस्त्वम् ।
पदे पदे त्वां परिदर्शयिष्ये
शक्तिं निजामेष कलिः कठोरः" ॥ इति ।

तद्देवि, भीमदुर्म्मदोऽयं कलिरुत्पातवात इव समुत्तिष्ठमानः केन वा शक्यो निवारयितुम् । यावद् यावद् यदेवायं घटयितुमभिप्रेति, तावत् तावत् तदेवायमनायासमसुकरमपि सम्पादयति ।

दम—आं दुरन्तस्य कलेरिदं प्रभावविलसितम् ?

नलः—देवि, अथ किम्, एतावता कालेन कदापि मया नेदं समुद्घाटितम्, अद्य तु कथाप्रसङ्गेन तव प्रस्तूयते । देवि, कथमन्यथा वत्सः पुष्करस्तथा स्यात् ? स हि मे कनीयान् पुरा—

नात्यशेत मदादेशं पुरो नोद्धतिमाश्रितः ।
अक्षक्रीड़ाविधौ प्राप्ते किं वा नाकृत मां प्रति ॥

दम—आं इदानीमवधार्य्यते कथमकस्मादिव पुष्करस्येयं भावपरि-

वृत्तिरिति। अथाधुना वत्सं पुष्करं प्रति शान्तो मे मन्युवेगः, यतः परप्रेरणा एवास्य नृशंसवृत्तिपरिग्रहे निदानमिति। अथ कथमतः परमपि अस्मदनिष्टमुत्पादयितुं तस्य प्रवृत्तिर्भविष्यति।

नलः—कथमिति ? सरलहृदया त्वं नावबुध्यसे। समाकर्णय, यदि पुनरावां राज्यलोभेन वा कारणान्तरेण वा निषधेषु गत्वा राज्यमधिकुर्य्याव, तदा मह्यानयं सुखप्रत्यूहः स्यात्, किन्तु यदि आवयोर्जीवनहानिस्तदैव निष्प्रत्यूहस्तस्य सुखसम्पात इति। कलिरपि निष्पादितवैरकृत्यः तत एव कृतकृत्यो भविष्यति।

दम—शान्तं पापं, शान्तं पापं, प्रतिहतममङ्गलमार्य्यपुत्रस्य।

नलः—प्रिये यथा तथा वा भवतु, अलमत्र क्षणमात्रमपि प्रतीक्षणेन; यावच्छीघ्रमनुगच्छ माम्। (परिक्रामति)।

दम—आर्य्यपुत्र, प्रायेण गगनमध्यमधिरूढो भास्वान्, तदिहैव क्वचित् सरोवरे निष्पादितस्नानादिकृत्यः कानिचित् फलानि समुपयुज्य गन्तुमर्हति भवान्; अन्यथा कोट्टशस्तावदतः परो वनाभोगः समुपनतो भवेत् तत्र को वा प्रमाणम्।

नलः—देवि, युक्तमभिहितं त्वया। (निरूप्य) किन्तु अत्र पादपा गगनभेदिनः परिलक्ष्यन्ते, अनभिज्ञश्चाहं पादपारोहणे तत् कथमिव फलसंग्रहः सुकरो भवेत् ?

(ततः प्रविशति गृहीतकिरातवेशः कलिः)

कलिः—एष भोः !

महामहिम्ना विविधप्रकाशः किरातजातिरनुरूपवेशः।
नलस्य चित्ते प्रनिधाय मोहं विड़म्बयिष्ये कलिरेनमद्य॥

भवतु यावदस्य समीपमुदासीन इव व्रजामि। (परिक्रामति)

नलः—(किरातं दृष्ट्वा) प्रिये लब्धं प्रतिविधानम्। एष कश्चन किरातो विहङ्गपिच्छालङ्कृतमस्तको लतापत्रप्रावृताधस्तनदेशभागो व्रजति, तदेनमाहूय वार्त्तां पृच्छामि।

दम—आर्य्यपुत्र, अलमस्य वार्त्ताप्रश्नेन; एनमालोकयन्त्या वेपत इव मे हृदयम्!

नलः—भीरु, अलमाशङ्कया, क्षणमपेक्षस्व यावदहमागच्छामि।

कलिः—(स्वगतं) अये, एष नल इत एवाभिवर्त्तते (हर्षं नाटयति)।

नलः—(उपसृत्य) भद्र, यदि ते न कार्य्यव्यतीपातस्तदा किमपि प्रष्टुमिच्छामि।

कलिः—(निपुणं दृष्ट्वा) अले, को तुमं, इध तुमं पूव्वदो ण कदाबि दिट्टो, ता णिच्चअं तुए बिदेसबासिणा होदव्वं।

नलः—भद्र, सुष्ठु जानासि, अद्यैव अस्मिन् कानने समुपगतं मां निषधवासिनमवगच्छ।

कलिः—कधं इध परिभअसदपज्जाउले बणप्पदेसे मिलिदे सि?

नलः—वने कियन्तं कालमवस्थाय प्रकृतिशोभा निरूपणीयेति।

कलिः—अदूले ट्ठिदा इत्थिआ तुह उजेब सहबट्टिणी?

नलः—अथ किम्?

कलिः—दुक्कलं क्खु, अजुभबसिदं अज्जेण, जं इरिसे पडिभअसदपज्जाउले इत्थिआसहिदो उबट्ठिदो।

नलः—भद्र, अलमत्र वृथा शङ्कया, क्षत्रियकुलोत्पन्नः पुरुषो नैतावता भीतिमाश्रयते—तस्य हि

क्रीड़ा नित्यममानुषी समुचिता शस्त्रेण युद्धाङ्गने,
लीलास्फारितसिंहवक्त्रविवरात्तद्दन्तकृष्टिः क्रिया।
वात्याव्याहतिरम्बुवर्षणमथो तिग्मांशुतापादयः
सर्वेषां सहनोचितं वपुरिदं क्षात्रं विधात्रा कृतम्॥

कलि—हुम्, तुह पलिपुट्टा आकिदी उजेब क्खत्तिअगुणं सूचेदि। अध किं पुच्छिदुं इच्छेसि?

नलः—एतत् पृच्छामि, अस्मिन् अरण्यप्रदेशे यावन्तो वृक्षाः संदृश्यन्ते,

ते सर्व्वे एव समुन्नतशिरसः। अथ किम् अस्मिन् नास्ति तथा कश्चन पादपो यस्य फलानि तमनारुह्य संग्रहीतुं शक्येरन्।

कलिः—अत्थि एत्थ तधा एक्को पादवो, किन्तु क्खु—

नलः—किमिव अपरम्?

कलिः—किन्तु क्खु इच्छामित्तकेण ज्जेव ण तदो फलाइं आहरिज्जन्ति।

नलः—तत् केनापरेण?

कलिः—सुणादु भवं, अत्थि एत्थ अह्माणं एक्को वुड्ढओ लाओ, सो ज्जेव तस्स पादवस्स अहिआलो।

नलः—तत् किमेष प्रार्थयितव्यः?

कलिः—अधइं। किन्तु क्खु पत्थणामित्तकेण ण कज्जं हुविस्सदि।

नलः—कथमिव?

कलिः—अत्थि एत्थ कोवि णियमो, जइ सो पालिदो होदि, तदो ज्जेव तदो फललाहो, ण अण्णधा।

नलः—कीदृशो नियम इति श्रोतुमिच्छामि।

कलिः—सुणादु अज्जो, अत्थि एत्थ वणब्भंतले कावि भूमी सुवण्ण-भूमी णाम।

नलः—अथ कथमियं सुवर्णभूमिरिति व्यपदिश्यते?

कलिः—जदो तहिं प्पदेसे प्पचहं सुवण्णविहङ्गाओ आअच्छिअ अण्णोण्णं कोदुअं करेन्ति।

नलः—तत्र किमस्माभिः कर्त्तव्यम्?

कलिः—तहिं गदुअ दुवे सुवण्णविहङ्गए कधंपि गेह्णिअ जइ से उवाअणं कादुं पालेसि, तदो पाविहसि। ता गच्छ, जाव अहं वि पसघलअं ज्जेव गच्छेमि।

नलः—भद्र, सुदुष्करमिदं कृत्यं ग्रामीणेन, तत् कथय अपि वनान्तरेऽपि न सन्ति तथा पादपा येषां फलानि करप्रचेयानीति

कलिः—पुणो पुणो वुच्चदि, एक्को ज्जेव तह पादवोत्ति, जइ ण पच्चग्रो, ता गच्छ इदो अवरं अम्हेहिं णो विसादं।

नलः—भद्र, कथं कुप्यसि? अनधिगतकाननवृत्तान्तोऽस्मीति पृच्छ्यसे।

कलिः—किदं सम्पदं पण्हाणुपल्लिग्राए, जाव अम्हेहिं विसादं दाव भणिदं, दाणिं जइ फलं कामेसि, ता गच्छ, अणधा इध ज्जेव कुक्खिविअणाए मूच्छिदो चिट्ठ।

नलः—भद्र, अपि युष्माकमधीश्वरः केनचिदुपायान्तरेण परितुष्टः पादपफलं नानुमन्यते?

कलिः—बहुसो ज्जेव वुच्चदि णिग्रमोत्ति, अध जइ इध विकप्पो ता कुदो से णिग्रमत्तणं।

नलः—तत् का गतिः, यावत् प्रकृतमनुतिष्ठामि।

कलिः—जं दे रोअदि। अहं घरअं ज्जेव गच्छेमि। (परिक्रामन्) मूढे दमयन्ति, मूढ नल, दुर्जात धर्म्म, एते यूयं पराभूताः स्थ। कियानवसरो मे युष्मानभिभवितुम्। एषोऽहमचिरात्—

नलेन भैम्या विरहं विधास्ये द्रक्ष्यामि तस्याः परमाभिमानम्।
धर्म्मप्रभावं च्यवितं करिष्ये निजां प्रतिष्ठां भुवि भावयिष्ये॥

भवतु गच्छामि साम्प्रतं स्वनियोगमनुष्ठातुम्। (निष्क्रान्तः)

नलः—(दमयन्तीमुपसृत्य) देवि, अपि श्रुतं भवत्या किरातवचनं?

दम—अथ किम् आमूलं श्रुतम्।

नलः—तदेहि यावत्तत्रैव गत्वा प्रकृतं निरूपयावः।

दम—आर्य्यपुत्र, इयमपि किं वा माया? यत् सत्यं न मे मनसो विशुद्धिरस्ति, पदे पदे विपदमेव परिशङ्कते मे हृदयं, तदलं तत्र गत्वा फललाभेन।

नलः—देवि, किमेवं शङ्कसे, लोकोत्तरेषु किरातेषु तथा नीतयो नैव विस्मयाय परिकल्प्यन्ते। तदेहि गच्छावः। ( निष्क्रान्तौ )

द्वितीयाङ्कः समाप्तः

---

## चतुर्थाङ्कः

( ततः प्रविशति सहर्षः कलिः )

कलिः—ही ही भोः ! विजयते प्रभावपर्य्यायः ! कुतः—

किरातवेशेन विमूढ़नैषधं
प्रतार्य्य सौवर्णविहङ्गवार्त्तया ।
वैरं विनिर्य्यातितमेव दुर्द्दमं
किमन्यदस्मात् परमस्य साध्यताम् ?

तथाहि मायाकल्पितसौवर्णविहङ्गसंयमनेच्छया तदानीं यावदेव साधनान्तरमनवेक्षमाणो नलहतकः कियाद्दूरं परिक्रम्य स्वं परिधानं तदुपरि निक्षिप्तवान्, तावदेव मायाविहङ्गास्तदुपादाय गगनं प्रति प्रस्थिता दृशोर्गोचरतामतिक्रान्ताः। अथासौ दमयन्त्या वसनार्द्धं वसानो नितरां परितप्यमानः पुनः पुनरेव अनिच्छन्तीमपि दमयन्तीं विदर्भप्रस्थानाय अनुरुन्धे। अहो मे सामर्थ्यम् !

आसीद्राज्यं तत् प्रदत्तं परस्मै
आसीत् प्रज्ञा सा च नीता विलोपम् ।

आसीद् वासो हारितं मायया तत्
कान्तारेऽस्मिन् कष्टसीमाऽस्य जाता ॥

अथवा अद्यापि महदवशिष्यते मे करणीयम्। कुतः—

एतावत्यपि दुर्दशाव्यतिकरे दाम्पत्यसौख्यक्रमः
सन्दोहः प्रतिभाति किन्तु विहितं तावत् प्रयत्नान्मया।
सम्प्रत्येष करोमि भीमदुहितुर्विच्छेदवित्रासनं
यावद्दैवगणावमाननफलं भुङ्क्ते चिरं दुर्गता ॥

तदेषा पतिमनुसरन्ती वर्त्तते, अहमपि यावत् कृत्यशेषं सम्पादयामि। ( निष्क्रान्तः )

## विष्कम्भकः

( ततः प्रविशत एकमेव वसनं वसानौ नलो दमयन्ती च )

नलः—प्रिये, अपि दृष्टमधुना दुरन्तव्यवसायस्य कलेरतिविस्मयकरं व्यवसितम्? आकर्णितश्चास्य क्रोधानलज्वालाजटिलं तर्जनवचनम्? तत् किमद्यापि मामनुवर्त्तसे, अप्रतिविधेयप्रभावः कलिरधुना विच्छेदमावयोः कर्त्तुकामो यथा कथमपि विरोधितया वर्त्तिष्यते। अलं सुमहत् कष्टमनुभूय, स्वेच्छया गृह्यतां वियोगः यतो दुरतिक्रम एष कलिकोपेन।

दम—आर्य्यपुत्र, किमेवं मां मन्दभागिनीमुपदिशसि। जीवनसमाप्तिरवश्यम्भाविनीति विजानतोऽपि न जायते विरागो भेषजसेवनेषु। तद् यदि अवश्यमेव कलिना आवयोर्वियोगः सम्पाद्येत, सम्पाद्यतां तेन। कथं स्वेच्छया एव वियोगो जनयितव्यः? दैवकृपया कदाचिदल्पायुषां मृत्युमुखे पततामपि किं न दृष्टो मरणव्यतिक्रमः। चिरमेव वयं देवानाराधयामः, स्वयंवरवेलायामपि प्राप्तं प्रमाणं देवकरुणायाः, तत् क एष कलिर्नाम देवानतिक्रमितुम्।

नलः—देवि, देवकरुणामपेक्षसे ? मुग्धे, सुषुप्तास्ते देवाः सुचिरात् प्रभृति, कथमन्यथा तथाविधे अपि परिणमति आवयोर्दशान्तरे लेशतोऽपि दृशं नारोपयन्ति ? पश्य—

या त्वं राजपुरोचितासि गहनं सा दुर्गमं प्रापिता,
या भोग्यैः समपेक्षिता फललवे तस्यास्तवाद्य स्पृहा ।
नाना भूषणभूषितासि पुरतो वस्त्रार्धमात्रक्षमा,
किन्तावद् विपदामुपेक्षणकरी देवी कृपाभूत् पुरा ॥

दम—(स्वगतम्) हन्त पिपासया अवसीदन्तीव मे अङ्गानि, परिशुष्य तीव हृदयम् यदि आर्य्यपुत्रस्तथा जानीयात् तदा क्लेशातिशयमेव अनुभवेत्, पिपासया जड़ीभूता तु रसना नालमेकमपि वचन-मुच्चारयितुम् । तद् यदि जलं याचितस्य आर्य्यपुत्रस्य पुरा फलप्रयत्नइव जलप्रयत्नोऽपि निष्फलः स्यात् ? अथवा का गतिः ? अनीशास्मि जलमन्तरेण सम्प्रति प्राणान् धारयितुम् । (प्रकाशम्) आर्य्यपुत्र, अपि सन्निहितोऽत्र जलाशयः ?

नलः—वाढ़मेष सन्निहितो दृश्यते । वचनक्रमेणैव पिपासार्त्ता विज्ञातासि, तदेहि जलाशयमनुसरावः । (परिक्रामतः) प्रिये, जलाशयं परिप्राप्तौ स्वः । अहो रमणीयसलिलेयं सरसी । प्रिये लब्धं हृदयनिर्व्वाणं यतः खलु पिपासाविनिवर्त्तनानि निर्म्मल-सलिलानीव स्निग्धा मृणालकन्दा अप्यत्र संलक्ष्यन्ते, तदत्रैव पिपासा क्षुधा चेति द्वयमेव शक्यं निर्व्वापयितुम्, तदेहि अव-तरावः । (अवतरणं नाटयतः)

दम—आर्य्यपुत्र, न निःशङ्कमवतरितुं समर्थास्मि, अपि नेयं कलि-हतकस्य माया स्यात् ?

नलः—(सरोवरं दृष्ट्वा सावेगं) प्रिये दमयन्ति, मा तावदवतीर्य्यतां, माया एव इयं, माया एव इयम् । अहो क्षुत्पिपासापरिक्षीणा

देवी त्वम् अदूरे समालोक्य सहसा स्वच्छसलिलं मृणालकन्द-प्रायं सरोवरं द्वितीयं समुच्छ्वसितमिव लब्धवती, सचायं चणेनैव समुपनतः शोणितसरोवरः। नैते मृणालाः परं समुद्यतशिरसो महाभुजङ्गाः, नैतानि स्वच्छसलिलानि परं तरङ्गितानि सफेन शोणितानि, नैतानि कमलानि प्रतिभान्ति परं शोणितरञ्जितानि अग्रमांसानि। प्रिये इत एहि इत एहि, मा तावदवतीर्णा भूः, कलेरिदं कठोरमायाविजृम्भितम्। (इत्यपसर्पति)

दम—आर्य्यपुत्र, अलमावेगेन। नाहमिदानीं तथा क्षुत्पिपासा-पर्य्याकुलास्मि, तदेषा शोणितसरसो सुधासरसो वास्तु तेन किं मे विनश्यति समुपचीयते वा? तदेहि इतोऽपसृत्य प्रच्छाय-शीतले वटपादपतले समुपविश्य निर्वृतौ भवावः। (परिक्रामतः)

नलः—देवि, विमूढोऽस्मि, अगतिकोऽस्मि, मुषितोऽस्मि, प्रज्वलन्तीव मे शिरांसि, तदेवं क्रियताम्। (तथा कुरुतः)

दम—आर्य्यपुत्र, प्रवातसुभगोऽयं वनोद्देशः, तदत्र प्रवातं सेवमानः किञ्चिदिव शान्तिं लभस्व।

नलः—देवि, एवमिदम्, अत्रहि—

सारङ्गाः पवनोन्मुखा मृदुगतिं वातं सुखं भुञ्जते,
दूरात् कौसुमसौरभं परिसृतं तृप्तिं परां यच्छति॥
शान्ता मानसवेदना खगकुलं सङ्गीतमासेवते,
कान्तारे विपदां पदेऽपि सहसा शान्तिः परा जृम्भते।

दम—आर्य्यपुत्र, अत्र विश्रामं लभस्व। विस्मृता मया सर्व्वैव क्षुत्-पिपासादिवेदना। तदलमद्य पदान्तरमतिक्रम्य, अत्रैव प्रवात-सुभगे वनोद्देशे दिवसशेषमतिपातयावः।

नलः—देवि, पथिश्रमेण परिक्षीणशरीरासि, तदत्रैव विश्रम्यतां, अथ यदि पुष्करेण अत्रापि अनुसृतः स्यां तदा साञ्जलिबन्ध-

मनुनीय निरुपद्रवं वनवासं प्रार्थयिष्ये। यदि तथापि दुरात्मा अत्याहिते प्रवर्त्तेत, तदा—

विस्मृत्य स्नेहधारां परुषपरिकरां चात्तवृत्तिं दधानो,
वीर्य्योपष्टम्भदम्भव्यतिकरविषमं सन्नियुद्धं करिष्ये।
उत्पातव्रातभीमं कलिमपि तरसा तत्सहायोपचारं
जित्वावीर्य्यातिरेकादनुजमनुगतं संविधातास्मिभूय:॥ ९

अथवा नाद्य तथाभूतोऽस्मि, अहो तथापि मत्त इव पदे पदे पूर्वतनीमवस्थामनुस्मरामि। (दीर्घं निश्वस्य) यथा तथा वा भवतु, अत्र क्षणं विश्राम: कर्त्तव्य एव। (स्वगतं) अहो अस्मिन् कान्तारे भैमी मे सहचारिणी, नहि नहि, नेदमुपपद्यते, प्रतिपदमेव कान्तारे विपद: सम्भाव्यन्ते तदेषा विसर्जयितव्या। एकाकी कान्तारे गमिष्यामि, अलं विकल्पेन, यथा कथमपि इयं परिहातव्या, दूरे सुदूरे मया गन्तव्यम्, तत् पश्येयं कियानवधि: स्यादिति।

दम—आर्य्यपुत्र, प्रवातमासेवमाना इच्छामि इह सुषुप्तिसुखमनुभवितुम्, अवसितप्रायो दिवस:, अस्तमुपगच्छतीव भगवान् सहस्रदीधिति:, तदिह कियन्तं कालं विश्रमितुमिच्छामि। (स्वगतम्) अहो सीदन्तीव मे अङ्गानि नात: परं चक्षुषी समुन्मीलयितुमीशास्मि, अथ यदि आर्य्यपुत्रो मां परित्यजेत्? नहि नहि तथा प्रियंवदो मे आर्य्यपुत्र: कथमीदृशे तमिस्रामुखे मामिकाकिनीं प्रतिभयशताकुले कान्तारे विहाय गच्छेत्? तदलमेवं भावनयापि।

नल:—प्रिये, एवमिदम्। अवसितप्रायो दिवस:, तथाहि—

मद्भाग्यान्यनुकृत्य तीक्ष्णकिरणो गच्छत्यरम्यां दशां,
तत्कान्तिरनुवर्त्तनेन किरणा: क्षीणास्तमोनिर्भरा:।

दुःखानामिव मानसं परिस्रुतध्वान्तैर्जगत् पूर्य्यते,
आशाबद्धहृदां प्रमोदतुलितो दूरे विशीर्णातपः।

तदिहैव मदीये ऊरुभागे शिरो विन्यस्य निद्रातुमर्हसि।

दम—तथैव कुर्य्याम्, किन्तु नाथ, एषा ते पादौ स्पृशामि मा खलु मामेकाकिनीं परिवर्जय कान्तारे। अनिच्छन्तो अपि निद्राबाधामतिक्रामितुमक्षमा स्वपिमि, तन्मम शिरसा शापितोऽसि यथा न त्वया दमयन्ती परित्यक्तव्येति।

नलः—किमिवं चञ्चलासि? को वा जनो ममास्ति त्वया विना अस्मिन् कान्तारे? तत् सुखं स्वपिहि, यावदहम् ऊरुं प्रसारयामि, (ऊरुं प्रसार्य्य दमयन्तीं सम्भ्रान्तां दृष्ट्वा) देवि, ममोरुमधिशयितुं सम्भ्रान्ता भवसि। देवि, अलं सम्भ्रमेण। नाहं तथा परिश्रान्तः यथा सम्भावयति मां भवती। अपि विस्मृतमिदं देव्या, यद्धि पुरा राजासनमधितिष्ठन्—

निस्त्रिंशक्षुण्णशत्रुद्विपरुधिरसमभ्युक्षिताङ्गः प्रकामं
युद्धे श्रद्धासमृद्धिव्यतिकरितमनाः खड्गघातान् व्यधार्षम्।
मल्लैः सामर्थ्यकीर्त्तिप्रथितगुणगणैर्बाहुयुद्धान्यकार्षम्
हर्य्यक्षप्रोथधर्षी त्रिभुवनबलिनां विस्मयञ्च व्यतार्षम्।

अपिच तदानीं—

निरन्तरकथामृतैरतनुभावसञ्चारितै
रनल्पकविकल्पना कलितहावसम्भावितैः।
अलोकमधुरक्रमा ललितरागविस्तारिणी,
मदीयभुजमाश्रिता शयितुमर्हरात्रं प्रिया॥

तदशङ्कमेव ममोरुमाश्रिता सुषुप्तिभोगेन निर्वृतिं लब्धुमर्हति देवी।

दम—(स्वगतं) अयि, कथान्तरेण अन्तरितो मे प्रश्नः, तत् पुनरपि पृच्छेयम्, अतिभूमिं गतो मे नाथेन आत्मनः परित्यागसन्देहः । भवतु एवं करोमि । (प्रकाशम्) नाथ, एष ते विहितो मया विनयाञ्जलिः, एषाहं शिरसि पादौ ते वहामि, कथय, नैव मन्दभागिनी दमयन्ती त्वया परित्यक्तव्येति ।

नलः—देवि, किमेवं पुनः पुनराशङ्कसे ? कदाचिदेवमपि स्यात् ?

दम—तदिदानीं निःशङ्का स्वपिमि ?

नलः—बाढ़ं निःशङ्का स्वपिहि ।

दम—नाथ, प्रियंवद, तथापि अहं कराभ्यां करौ ते गृहीत्वा सुप्ता भवेयम् । (स्वगतम्) अद्य कथमपि न मे चेतो विश्वसितुमिच्छति यथा आर्य्यपुत्रो मां न परित्यक्ष्यतीति । तदिदमेव सम्यक् चिन्तितं मया, अथवा एकमेवावयोः परिधानं, कथमेतावता परित्यागः सुकरः स्यात्, तदलं चिन्तया । (शेते) प्रियंवद नाहं सुचिरं सुप्ता भविष्यामि, यतः प्रदोषे समधिका सुप्तिरनिष्टाय परिकल्प्यते । तदियमहं क्षणमात्रकेणैव निद्रामनुभूय पुनस्ते पादसेवां करोमि ।

नलः—प्रिये, अलमुत्कण्ठया, यावच्चिरं स्वपिहि, अक्षमायास्ते प्रदोषसुप्तिरपि नातिमात्रदोषाय सम्पत्स्यते ।

दम—यूयमेव विज्ञतमा गुणदोषयोः प्रमाणम् । (स्वपिति)

नलः—अहो संविधानकम् !

साम्राज्यं निरुपद्रवं परिजना वश्या यशो निर्म्मलम्,
निर्व्याजोपनतं मनोरथमलं पूजा प्रजाभिश्चिरम् ।
नैष्ठुर्य्येण विधेरिहाद्य सकलं सद्यो विपर्य्यासितं
हा कष्टं निजदुर्विवेकलसितं किं दुःखमस्मात् परम् ॥

प्रिये दमयन्ति सुप्तासि ? अहो कष्टं !

पुरा कुसुमसंस्तरे मृदुलगन्धसम्भाविते,
न या व्रजसि सम्मदं प्रियपदोपचारा चिरम् ।
वनभ्रमणविक्लवा विकलसन्धिबन्धा सती
सती स्वपिषि सम्प्रति प्रकटकङ्करोपप्लवे ॥

देवि, अपि सुषुप्तासि ? अहह, स्वपिहि, चिरं स्वपिहि, पथि-श्रमानपनेतुकामा दिव्यं वर्षशतं स्वपिहि । ( निर्वर्ण्य ) अहो लावण्यं प्रियायाः ! तथाहि—

निशामिलनसंकुचत्कमलमुग्धनेत्रच्छविः,
प्रसूनदलकोमला शिथिलसन्धिदेहोच्चया ।
नवीनतरुपल्लवोल्लसितशोणदीनाधरा,
ममैव तपसः फलं त्रिदिवदुर्लभेयं प्रिया ॥

दुर्जात, दुरन्त, कलिहतक, किं मे भयं प्रदर्शयसि ? यदि सुचिर-मेव त्वं तथा प्रतिकूलवर्त्ती भवेः, यदि सर्वमिदं जगदेव मे शात्रवपक्षे वर्त्तेत, तथापि—

केवलं प्रियतमाविलोकनात् तत्कृतप्रियकथानिषेवणात् ।
सर्वदुःखमपनीय मानसात् स्वर्गसंमितसुखं समीच्यते ॥

( सानुरागं पश्यति )

( ततः प्रविशति मोहः गायन् )

परिसर दूरं त्यज रसपूरं सुप्ता विलसति भीमसुतेयम् ।
नरपतिदुहिता बहुसुखललिता किमिति च तस्या दुःखं देयम् ॥
शरणविहीना नितरां दीना सपदि गमिष्यति जनकनिकेतम् ।
त्वरितं परिसर कुरूपां परिहर वितरति देवस्तव सङ्केतम् ॥

नलः—अहो रागपरिवाहि सङ्गीतकम्, किमिदं मामेव समुद्दिशति ?

( मोहः पुनरपि परिसरेत्यादि गायन् निष्क्रान्तः। )

नलः—अये सहसा विलुप्तं सङ्गीतम्! तदिदं मामेव नूनं समुद्दिशति। कोऽयं निर्जने वने तथा सङ्गीतसुधां वर्षति? किमियमपि माया? भवतु वा माया, तथापि प्राप्तकालमेवोपदिशति। तदलं विलम्बेन, तथाकृते मनोरथो मे व्याहन्येत। गन्तव्यं, सुदूरं गन्तव्यं, भैमी मया सह कुतो गमिष्यति? अद्यैव तन्वी पथिश्रमेण परिश्रान्ता, तस्मादेकाकिना मया गन्तव्यम्। देवि, स्वपिहि, सुखं स्वपिहि।

भ्रमादमृतपादपं फलभरोपनम्रं सुखे,
विहाय विषपादपे सुचिरमेव लग्नं त्वया।
फलञ्च कृतकर्म्मणो विषमदैवसंघट्टनात्,
अहो परिणयात् परं कियदिवोपभुक्तं भृशम्॥

तदलमद्यापि मामेव समाश्रित्य निरन्तरं दुरन्तदुःखभोगेन। बहुश एव पितृभवनप्रस्थानाय याचितासि, किन्तु कदापि त्वं नाभिलषितवती; ततः स्वयमेवाद्य दूरं व्रजामि। देवि, अहह, स्मरामि यत् मया परित्यक्तायाः प्रबुद्धायास्ते कीदृशी गतिर्भविष्यतीति। यदैव प्रबुद्धा त्वं मामन्तिके न द्रक्ष्यसि तदा किं जीवनं धारयितुं समर्था भविष्यसि। अहह!

दम—( उत्स्वप्नायते ) आर्य्यपुत्र, अपि विस्मृतप्रतिज्ञोऽसि? देव, अहं सहचारिणी ते किन्नु भारभूतास्मि?

नलः—अये निरन्तरं विरहचिन्ताप्रसूतस्वप्नसम्भ्रमा उत्स्वप्नायते दमयन्ती। प्रिये सत्यं ब्रवीषि, इदानीं भारभूतैवासि। कुतः?

साम्राज्यप्रियभावनाव्यतिकरात् पुत्रानुरूपप्रजा-
प्राप्तिप्रौढ़समागमप्रणयितास्पर्शोपसृष्टापदः।

मुक्तो राजपदोचितप्रतिभयान्नास्ते ततो भावना,
त्वच्चिन्ता परितो विभाति वितता सर्व्वार्थविध्वंसिनी॥

किं वा समधिकं ब्रवीमि—

भारः प्राक्तनभावसंस्मृतिकरी बुद्धिर्विलुप्तप्रभा,
भारो भाविदशावधारणमतिर्भारोऽङ्गसञ्चालनम्।
भारो जीवनमेव मे विषमयं सर्वं मया वीक्ष्यते,
भारस्त्वं तव चिन्तनं तव दशा भारोऽद्य विश्वं हि मे॥

दम—( पुनरुत्स्वप्नायते ) आर्य्यपुत्र, अपि विस्मृतस्त्वया पूर्वप्रणयः? नित्यमेव भवता प्रस्तुतं यथा प्रिये कतमत् वस्तु मे प्रियतमं भवत्या विनेति।

नलः—प्रिये, न विस्मृत इत्येतदेव कारणं भवत्या विसर्जने। प्रिये, अपि जानासि यदद्य निराहारां पथिश्रान्तां विशीर्णदेहां भवतीं वीक्षमाणः प्राणैः पणैरपि तव क्षुत्पिपासाविनिवृत्तिं कर्त्तुमक्षमः कीदृशोऽस्मि? अपि जानासि यत् बुद्धिभ्रमात् सुवर्णविहङ्गेषु प्रलुब्धो वसनमात्रमपि हारयित्वा त्वया सह एकमेव वसनं वसानः कीदृशोऽस्मि? अपि जानासि यत्तदानीं पिपासाक्षामकण्ठीं भवतीं सरोवरसमीपमुपनीय शोणितमयं भुजङ्गमयम् अग्रमांसमयञ्च तमवलोक्य मनोरथभङ्गविकारेण कीदृशो जातोऽस्मि? अहह, यदि एतत् सर्वमवधारयसि तत् किमद्यापि निर्बन्धवती भवितुं पारयसि? प्रिये, दुःखं मा कार्षीः, अनुमन्यस्व मां सुदूरगमनाय, यथा सम्प्रति दुर्निमित्तानि लक्ष्यन्ते, तथा मन्ये सुतरां दुष्परिहर एव आवयोर्वियोग इति। विचारमनुसरन्नपि साम्प्रतमावयोर्वियोगमेव श्रेयस्करम् अवधारयामि। तन्नूनं मया गन्तव्यम्, एकाकिना गन्तव्यम्। (स्मृत्वा वसनमालोक्य) अहो प्रमादः! दुर्लभं फलमस्य मनोरथस्य, आवामेकवसनौ

तत् कथमिदम् इदानीमनुष्ठातव्यम् ? अयमेव शुभावसरो मे दूरगमनाय, तत् किं करोमि ? यदि अयमवसरो व्यतीतः स्यात्, तदा दमयन्ती प्रबुद्धा गमनबाधां मे नियतमुत्पादयेत् । तदत्र का गतिः ? (इतस्ततो विचिन्वन्) अपि अत्र किरात-शताधिष्ठाने कानने किमपि शस्त्रादिकं नोपलभ्येत ? (दृष्ट्वा सहर्षम्) अये इदं तत् प्राप्तम्, अहो मुग्धता ! कियच्चिरात् इदं दृश्यतामुपगतम् । भगवन्, भूतभावन, यत्सत्यं सानुकम्प एवासि, तद् भवतु, अलं विलम्बेन, अन्यथा दमयन्ती संज्ञां लब्ध्वा मनोरथं मे विघटयिष्यति, (करेण शस्त्रं गृह्णाति) प्राप्त-कालोपनत शस्त्र,

देवताकरुणया तवागतिः, दृष्टमत्र न किमन्यथा पुरा ।
इन्द्रजालसदृशानि देवताजृम्भितानि घटयन्ति नूतनम् ॥

यथा तथा वा भवतु दमयन्ती जागरिष्यति, मनोरथो मे व्याहतो भवेत् । तदेष लघु लघु वसने शस्त्रं व्यापारयामि । (साशङ्क इव) मा नाम सम्भ्रमात् दमयन्ती शस्त्रव्यापारं जानीयात्, तद-प्रमत्तः शस्त्रं व्यापारयेयम् । (शस्त्रं व्यापारयन् भैम्याः शरीर-स्पन्दं रूपयित्वा) धिक् प्रमादः ! एषा दमयन्ती स्पन्दते, धिक् विफलकामोऽस्मि, (दृष्ट्वा) न तथा खल्विदं, यथाहं सम्भावयामि, अहो समुज्जीवितोऽस्मि, एषा मशकदंशनात् परित्रस्ता स्पन्दते, भवत्वेवं तावत् (वसनाञ्चलेन वीजयति ।) पुनः सुषुप्ता देवी, तद् यावत् स्वाधिकारमनुतिष्ठामि । (पुनः शस्त्रं व्यापा-रयति) ।

(ततः प्रविशति गायन् विवेकः)

विरम देव विरम देव किमिति मूढ़मन्तरं,
धर्मदारपरिह्वतिमनु हृदयं किम सादरम् ।

जनविरहित-गहनविपिनमिदमतिभयकारणं,
एका बत भीमजात्र वसतु कथमिवावरम् ॥

नलः—अये क एष सहसा जनशून्येऽस्मिन् कान्तारे दमयन्ती-परित्यागव्यवसायिनं मां सङ्गीतव्याजेन निवारयति? प्रथमतो गीतमाकर्णितं, यत्र दमयन्तीमपहाय सुदूरे प्रस्थानादेशः, परतश्च गीतं श्रूयते तत्र दमयन्तीपरित्यागनिषेध इति। तदत्र कतरत् मतं परिपाल्यताम्? (विचिन्त्य) अथवा परमेव मतं परिपालनीयम्, अस्मिन् कान्तारे सहायशून्या दमयन्ती मया परिवर्जिता कुत्र गमिष्यति? अथ क एषः गैरिकधरः सङ्गीतकारी? अपि कदाचिदेष मया दृष्टपूर्वः स्यात्? अथवा किमेतेन, यथा तथा वा भवतु, दमयन्ती सर्वथा एव मया अपरित्याज्येति। देवि, स्वपिहि, यावच्चिरं सुखं स्वपिहि, अलमधुना विरहचिन्ताजनितेन उत्-स्वप्नायितेन; यावदेव ते श्रमबाधा विलीना भवेत्, तावदेव श्रान्ता स्वपिहि। अकालोपनत शस्त्र, किंवा फलं त्वया दैवोपनतेन? तदिदानीं—

मोहः श्रान्तो दीपितात्मा विवेकः,
स्वान्ते भूयो भीमजा स्नेहदीप्तिः।
वस्त्रच्छेदान्नास्ति मे कश्चिदर्थो,
हे शस्त्र त्वां त्यक्तुमिच्छामि तस्मात् ॥

तदलमद्यापि शस्त्रस्य धारणेन। (शस्त्रं त्यक्तुमुपक्रमते)

(नेपथ्ये मोहो गायति)

धारय शस्त्रं छन्त च वस्त्रं चिन्तालवमपि दवय सलीलं,
नरपतिदुहिता चिरसुखललिता नयसि किमेनामनुशयकीलम्!
शरणविहीना सुतरां दीना सपदि गमिष्यति जनकनिकेतं
दूरं परिसर कुकृपां परिहर वितरति दैवस्तव सङ्केतम् ॥

नलः—( श्रुत्वा ) अये पुनरपि दूरगमनादेशसङ्गीतम् ? तत् किमु खलु इदं भवेत् ? कर्त्तव्यमूढ़ोऽस्मि संवृत्तः । भगवन् मायाधर, किमेवं मां पदे पदे मोहयसि ?

( पुनर्नेपथ्ये मोहो गायति )

घनवनमाला कदनकराला प्रस्तरबन्धुर-सरणिकठोरा,

कोमलचरणा शिथिलितकरणा भीमसुता वत दुष्करचारा ।

समयो विलसति परिसर सम्प्रति मा कुरु मा कुरु विपुलविचारं

धारय शस्त्रं छिन्त च वस्त्रं परिहर परिहर हृदयविकारम् ॥

नलः—( आकर्ण्य ) मायाधर, योऽसि सोऽसि, प्रदर्शितस्त्वया मे मङ्गलमयः कृत्यमार्गः, नातःपरमपि विकल्पयिष्ये । दूरं गन्तव्यम्, एकाकिना मया सुदूरं गन्तव्यम् ! परिपेलवाङ्गी दमयन्ती मया सह कुतो गमिष्यति ? राजनन्दिनी सुखमात्रोचिता दमयन्ती मया सह कथं वनवासदुःखमनुभविष्यति ? तदियमवश्यं परित्यक्तव्या ! भगवन् भूतभावन, दृश्यतामियं मन्दभागिनी त्वया कान्तारे । नातःपरमपि विलम्बिष्ये, दमयन्ती जागरिष्यति ! एषा स्पन्दते, एषा दीर्घं श्वसिति, एषा परिवर्त्तत इव, तदलं विलम्बेन, लघु लघु शस्त्रव्यापारं करोमि । ( साशङ्कं शस्त्रं व्यापारयन् ) मा नाम शस्त्रव्यापारसम्भ्रमात् इयं जागृयात् ! एष वसनं छिन्द्रामि, प्रायेण निकृत्तम्, ( सहर्षमिव ) अये समाप्तमनोरथोऽस्मि । अथेदानीं विदर्भदुहितरं स्वशरीरादवतारयामि । ( लघु लघु दमयन्तीं भूमौ अवतारयति) मा नाम भूमौ स्थापितं निम्नतां गतं मस्तकमस्याः संज्ञां समुत्पादयेत् ? तद्भवतु इदं वृक्षमूलं सन्निहितं वर्त्तते, अत्रैव मस्तकमस्याः स्थापयामि । ( तथा करोति ) अये कृतकृत्योऽस्मि, अपगतो मे महानन्तःकरणभारः, तदलं विलम्बेन एष गच्छामि, ( दमयन्तीं दृष्ट्वा )

देवि, एष पश्चिमस्ते विनयाञ्जलिः, यदि कश्चिदपराधो ममाविजानत इत ऊर्द्धं स्मर्य्यते, स सर्वथा चन्तव्य एव । देवि, किं वा ब्रवीमि, अनिच्छतापि नलहतकेनाद्य घोरे हिंस्रजीवसम्प्रचारे दुरन्त किरातशताधिष्ठाने कानने विमुच्यसे । कथमिति ? कलिहतकादेशात् । नियतमेव जानामि यथा त्वमियं सकलसुखोचिता मया सह विद्यमानैव क्लिष्टासीति । नियतमेव कञ्चन दूरे अतिदूरे अवतिष्ठमानं प्रस्थानाय प्रवर्त्तयन्तमुपलचये । देवि, यदा ते सुखस्वप्नोऽयमपगमिष्यति, तदा मदर्थं शोकमकुर्व्वाणा गच्छ विदर्भेषु, अलमत्र हिंस्रजन्तुप्रचारभयङ्करे घोरारण्ये चणमपि चपयित्वा । देवि, स्वपिहि, गाढ़ं स्वपिहि, यावदेव नापनीयते वनभ्रमणपरिश्रान्तिस्तावदेव स्वपिहि । जागरिता विकलहृदया भवती यदि केनापि पृच्छ्येत, क्व ते पतिरिति, तदा लोकान्तरं प्रस्थित इत्येवं ब्रूयाः, अन्यथा को वा जीवन् मादृशः प्रियतमां सुखमात्रोपचारां धर्म्मपत्नीं हिंस्रजन्तुभीषणे घोरे कानने परिवर्जयेत् ? ( विचिन्त्य ) किं नाम ? धर्म्मपत्नी प्रियतमा विदर्भराजनन्दिनी दमयन्ती नलेन विजने वने परित्यज्यते ? मूर्ख नल अपि अपध्वस्तोऽसि ? देवानवधूय या त्वां वृतवती, तवैवार्थे स्वर्गसुखच्युता सा दुःखान्तराणि सेवमानापि न परिखिद्यते, तामिनां परिवर्ज्य केवलमात्मनो निरुपद्रवतां विचिनोषि ? नैतत् कदापि परिचिन्तयसि, यथेयं त्वया विना कान्तारे स्मरणीयामेव दशामुपगमिष्यतीति ? धिङ्मूर्ख,—

विपत्पातव्यलीकेन विवेकस्ते लयं गतः ।

हा हा त्वदेकशरणा कथं वा त्यज्यतामियम् ॥

यथा तथा वा भवतु, कथमपि नेयं परित्याज्या, सहैव प्रियया दयमन्त्या सुखं दुःखं वा भोक्तव्यम् । ( तूष्णीं स्थितः । )

( नेपथ्ये ) अत्याहितं भोः ! अत्याहितम् !

नलः—( सोत्कण्ठम् ) किमिव ?

( नेपथ्ये ) नागः कर्कोटको नाम शापग्रस्तो वने वसन् ।
दावानलप्रभावेण दह्यते रक्ष्यतामयम् ॥

नलः—अयि, न कश्चिदस्य परित्राता ?

( नेपथ्ये ) जात्या भुजङ्गमः सोऽयमिति कश्चिन्न रक्षकः ।
प्रज्वलद्दावदीप्ताग्नौ को वात्मानं विमुञ्चतु ॥

नलः—धिक् कष्टम् ! किमहो जनशून्यमरण्यं ? येन हि
याचमानमपि त्राणं नो परित्रायते भयात् ।
नश्वरस्य शरीरस्य प्रणयः परिपोष्यते ॥

( नेपथ्ये ) अहो निराशोऽस्मि जीविते,—तथाहि—
समुद्दीप्तशिखास्पर्शैररण्यं परितो दहन् ।
आवृणोति महावह्निर्भस्मतां नेतुमेव माम् ॥

हा हतोऽस्मि, नास्ति कोऽपि मे परित्राता ।

नलः—( ससम्भ्रमम् ) अभयमभयं भयार्त्तस्य, एष नलस्ते परित्राता ।—

चिरमुचितभयार्त्तव्यूहभीतिप्रणाशे,
यदि वनभुवि नश्येन्नश्वरं जीवनं मे ।
तदिह सफलतायाः प्राप्तवानस्मि सीमां
मृगकुलमपि जीवत्यत्र को वा विशेषः ?

तदेषोऽहमचिरात्—

प्रविश्य तरसा वह्निमार्त्तविक्षोभकारिणम् ।
तमार्त्तं परिरक्षेयं पुरुषाणामयं क्रमः ॥

( दमयन्तीं दृष्ट्वा ) देवि, स्वपिषि, तिष्ठ सुचिरमिहैव, एषोऽहं कर्त्तव्यानुष्ठानाय समाहूतो नालमस्मि क्षणमपि प्रतीक्षितुम् । प्रतीक्षया नूनमार्त्तस्य प्राणहानिः, तदेष गच्छामि । (निष्क्रान्तः) ।

दम—( स्वल्पं प्रबुद्धा ) अहो कियच्चिरं निद्रितास्मि, आर्य्यपुत्र, नूनं महद्दुःखं ते जातं, तदिदानीम् अहम् उत्तिष्ठामि त्वं निद्राहि। ( प्रबुद्धा नलमपश्यन्ती ) अयि क्व मे प्राणनाथः, आर्य्यपुत्र, क्वासि, देहि मे प्रतिवचनम्, हा हतास्मि मन्दभागिनी। ( मूर्च्छति )

( ततः प्रविशति सहर्षः कलिः )

कलिः—( सहर्षम् ) ही ही भोः! प्रायेण समापितकृत्योऽस्मि, मूढ़े दमयन्ति, न जानासि कठोरव्यवसायिनं कलिं माम्? अनभिजाते! भुङ्क्ष्व साम्प्रतं फलानि दुष्कृतानाम्, अनुभवेदानीं पारुष्यं कलिप्रभावस्य। साम्राज्यस्य लोपः, हिंस्रजन्तुप्रचारप्रतिभयाकुले कानने वासः, एकेन वाससा दीनातिदीनवत् सञ्चरणं, दुष्टेन नलहतकेन पत्या वियोग, इति एतन्मात्राख्येव किं पर्य्याप्तानि मन्यसे? पृच्छ स्वं दुरन्तं भागधेयं कियदपरमवशिष्टमिति। ( स्मृत्वा ) धिक् प्रमादः! हर्षेण विस्मृतं, गतः खलु नलहतको दमयन्तीमिह परित्यज्य दावाग्निना दह्यमानं कर्कोटकं परित्रातुम्, अहो धृष्टता! एतावत्यामप्यवस्थायां परान् परित्रातुमीहते। मूढ़, रक्ष आत्मानम् आत्मनो दयिताञ्च, किन्ते परपरित्राणप्रयत्नेन? भवतु इदानीं पश्यामि कीदृशमयं नलहतको व्यवस्यतीति। ( निष्क्रान्तः )

दम—( संज्ञां लब्ध्वा ) हा नाथ निषधेश्वर, क्व गतोऽसि? एकाकिनीं मन्दभागिनीं परित्यज्य चिराय प्रस्थितोऽसि? प्रियंवद, पुरा निरन्तरमेव त्वया कथितं—देवि, प्राणेभ्योऽपि प्रियतरासीति; किमिदं तस्यैव निदर्शनम्? नाथ, अपि सत्यमेव गतोऽसि? हा हतास्मि मन्दभागिनी, शून्यं जीर्णारण्यं जगत्, क्व गच्छामि? किं करोमि? कं शरणं प्रपद्ये? हा दमयन्ति, प्रनष्टासि,

हा मूढ़े, कथं सचेतनासि ? यदि निद्रिता तत् कथमचिरादेव लब्धजागरासि, किमिति महानिद्रां नोपगतवती ? भगवन् भूतभावन, अपि फलमिदं तव सुचिरमाराधनायाः ? शङ्कर, शङ्कामारूढ़ः सम्प्रति ते देवमहिमा । भगवति, दाक्षायणि, त्वमपि किं विस्मृतवती पतिविरहदुःखं पतिव्रतानाम् ? भगवन् धर्म्म, अद्य सर्वथा प्रसृतस्ते ऐश्वर्य्यसम्भारः ! हा धिक् कष्टं ! विमूढ़ास्मि, विह्वलास्मि प्रनष्टास्मि, परिमुषितास्मि ? हा नाथ, को मे पालयिता त्वया विना अस्मिन् विजने कान्तारे ? का ते पादौ सम्वाहयिष्यति, का ते पिपासानिवर्त्तनाय सलिलमानेष्यति, का वा परिश्रान्तस्य ते स्वेदाप्लुतं शरीरं वसनान्तेन वीजयिष्यति ? का च ते पदोपान्ते समासीना निरर्थवचनशतेन दुःखान्तरेऽपि सुखान्तरमाहरिष्यति ? हा हतम् ! लुप्तं सर्वमेव दमयन्त्या भाग्यदोषात् । हंहो निदारुणविधे, किमेवं प्रतिपदमेव सुदारुणो भवसि ? किमपराद्धं मया मूढ़या भवच्चरणयोः ? यदेवं मुहुरुपास्यमानोऽपि निष्ठुरोऽसि ? अयि वनदेवते ! अपि सुप्तासि ? कथय कुतो मे प्राणप्रियो निषधनाथो गत इति । हा हतास्मि, हन्त विपर्य्यस्तास्मि, ( आत्मानं सन्धार्य्य ) अथवा किन्नु एवमपि स्यात् ? तथा प्रियंवदो मे आर्य्यपुत्रः किं मन्दभागिनीं त्वदेकजीवितामशरणां कथमपि कानने परिवर्जयितुं शक्नुयात् ? तदलीकमिदं सम्भाव्य किमिति विषीदामि ? नूनं स मे जीवनदयितो मां प्रतारयितुमन्तरालं सेवते । प्राणाधिक निषधनाथ, किमद्यापि ते न पर्य्याप्ता प्रतारणा ? दर्शय आत्मानं, त्वया विना परिकम्पते मे हृदयं कान्तारे । ( परिक्रम्य ) कथमत्र प्रच्छन्नोऽसि ? नहि, नहि, किं वा अत्र प्रच्छन्नोऽसि ? नहि, नहि, कियद्दूरं प्रस्थितोऽसि ? नाथ, अलं मे भीतायाः प्रवञ्चनया, एहि शीघ्रम्, अद्य त्वामपश्यन्त्याः समुत्क्रान्तमिव

मे जीवितम् । कथं प्रच्छन्नो भवानद्यापि ? ( अन्विष्य अलब्ध्वा ) हा हतम् ! कुतोऽद्यापि प्राणेश्वरो मे वनान्तरेऽस्मिन् ? दूरमतिक्रान्तः, नाथ, क्वासि देहि मे प्रतिवचनम् । अलं मन्दभागिनीमिमां दुःखान्तरे निक्षिप्य, ( पुनरात्मानं सन्धार्य्य ) आं ज्ञातम्, किमिति वृथा एव आक्रोशामि, धर्म्मवीरो मे आर्य्यपुत्रः कथमपि मां धर्म्मपत्नीं न परित्यक्तवान्, दृष्टो मया तदानीं क्षुत्पिपासापरिश्रान्त आर्य्यपुत्रः, तन्नूनं तन्निवर्त्तनार्थमेव सुप्तायां मयि प्रसृतवान् कियदन्तरं, तदविलम्बितमेव प्रत्यावर्त्तेत । आर्य्यपुत्र, अलमधिकेन विलम्बेन, किमिदानीमपि न लब्धोपचारोऽसि ? यदि तथा तदलमधुनापि प्रतीक्षणेन, बिभेमि भीरुरेषा त्वाम् अन्तरेण । ( श्रुत्वा सहर्षम् ) अये एष जीर्णपर्णानामुपरि पादसञ्चारशब्दः ! एष आर्य्यपुत्रो मे प्राप्तोपचारो निवृत्तक्लमः प्रत्यावर्त्तते । नाथ, अपि एतावता कालेन स्मृतेयं मन्दभागिनी ; अहह, नूनं सुदूरं प्रसृतः क्लान्तोऽसि, तदेषाहं तवाग्रतः स्वयमुपगच्छामि । ( निष्क्रान्ता )

इति चतुर्थाङ्कः

———

## पञ्चमाङ्कः

ततः प्रविशन्ति काननं विचिन्वन्तः त्रयः
सशरासनहस्ताः किराताः ।

१मः—अले बज्जहत्था, अज्ज बिसेसेण अचिदव्बा अह्माणं लण-चण्डिआ । ता जधा पसुमालणव्बाबालो सुब्बबट्टिदो भवे तधा कलेह्नि ।

२यः—हण्डे णिलापुत्तअ, को दाव अज्ज बिसेसो, णिच्चअं ज्जेव अह्मे पसुमालणव्बाबालं अणुचिट्टेह्म, ता कधेहि ।

१मः—अलेले, णिच्चस्स बि कज्जस्स अज्ज महन्तो बिसेसो, जदो अज्ज क्खु अमावस्सा तिधीत्ति । जहिं लणचण्डिआए देइए अच्चणं णिअमदो कादव्बं, अत्ता क्खु लणचण्डिआ लुहिलेहिं मंसेहिं अ अहिअं पलिदुट्टा होदि ।

२यः—अध णिलापुत्तअ, अबि ओधालेसि, कधं अह्माणं अत्ता जीआणं लुहिलेहिं मंसेहिं अ पलिदुट्टा होदि त्ति ? किं ण क्खु जधा एसा अह्माणं ण तधा ताणं बि, जइ एव्बं ता कीस पुत्तआणं लुहिलं मंसं अ इच्छेदि, ता एत्थ मह संसओ जादो ।

१मः—हण्डे सुत्तलाअ, चिट्ठदु तुह धम्मिअत्तणं, किं क्खु अह्माणं ताए चिन्दाए, अह्मे मादुणो पुत्तआ, जधा जधा अत्ता पलिदुट्टा होदि, तधा तधा ज्जेब अह्मेहिं कलणिज्जं ।

२यः—हो: हो: ! धम्मिए एसे नले बिअ । ब्बदे क्खु अह्माणं पसु-मालणे । ता को एत्थ कधं त्ति कालणबिआरो ? अलं एदिणा अणत्थजप्पिदेण, एध कादव्बं करेह्म ।

१मः—एव्बं सेदं, अण्णधा लणचण्डिआ जइ कुप्पिस्सदि ता अह्माणं कुलेसुं बत्तिअं पि णिव्बत्तेदुं एक्कं बि ण लक्खिस्सदि ।

२यः—एव्बं कलेह्म ।

१मः—अले सणेहिं सणेहिं पाअसंचालणं कलेअदु णिच्चिदं दूध ज्जेव अह्माणं अहिलासो पलिपुस्सो हुविस्सदि ।

२यः—जइ लणचण्डिआए कलुणा भवे ।

१मः—अलेले पेक्ख पेक्ख पच्चिमादो आआसदेसादो ओदलदि भअबं सूले, ता सच्चं अह्माणं लाआ कुपिस्सदि जदो अह्मेहिं अदिमेत्तओ विलम्बो किदो । ता तुलिदं तुलिदं कज्जाइं आलम्भध ।

उभौ—तधा कलेह्म । ( सर्व्वे परिक्रामन्ति ) ।

१मः – अले, तुह्नीं अवलम्बेध, सणेहिं सणेहिं सञ्चलेध, एसो को वि सुपुट्टसलीलो मिअपोदओ, ता अवधानं कलेध । (शरं योजयन्) एसो मए ब्बावादिदो । ( शरं क्षिपति )

३यः—( दृष्ट्वा ) आः मूक्खअ, तुह सलगोअलं पलिहलिअ पलाइदो एसो ।

१मः—हीमाणहे, कधं ब्बर्थो सम्वुत्तो मह पढ़मबाणक्खेबो ? ण क्खु ओधालेमि किं अज्ज णिबड़िस्सदित्ति । होदु पुणोबि चेट्टिदब्बं । मादोए लणचण्डिए प्पसोद तुह पुत्तकेसुं, अलेले उग्घोषेध मादुणो लणचण्डिआए बिजअसद्दे ।

सर्व्वे—देइ लणचण्डिआ जअदि ।

१मः—अबहिदेहिं हिअएहिं कज्जं कलेध, एक्कदो प्पाणआ, अस्सदो कज्जं, प्पाणआ चिट्टन्तु ब्बजन्तु बा कज्जं सच्चअं ज्जेब कादब्बं ।

२यः—अले एसो अबलो मिओ ।

३यः—माक्खु माक्ख, एसा गोहा बट्टदि । एसा मालिज्जदु, दूध ज्जेब मादुणो अहिआ अणुलत्तो ।

१मः—एब्बं एसा गोहिआ मालिज्जदि । ( शरं क्षिपति )

उभौ—आः मूक्खअ, एसा बि पलाइदा ।

१मः—किंणु क्खु, एसा गोहिआ बि सलगोअलं अदिबहिदा ? हा

कट्टं, अज्ज केणवि अणत्थेण होदव्वं। ता दाणिं का गइ ?

२यः—मए क्खु एव्वं चिन्तिज्जदि।

१मः—कधं विअ ?

२यः—इदो णादिदूले मिअकाणणं णाम काणणं बट्टदि तहिं गदुअ अहिलासं सम्पादेह्मत्ति।

३यः—तहिं ज्जेव मिअकाणणे मिअवेधं उद्दिसिअ गन्दव्वं ?

उभौ—अधइं ?

३यः—अणभिषा ! तहिं इध प्पदोसे बहुलाओ सिंहाओ सञ्चलेन्ति।

उभौ—किं तेण ?

३यः—तेणहि एदेहिं बच्छलेहिं मच्छेण मंसेण अ पलिपुट्टं एदं सलोलं ण बट्टिस्सदि ज्जेव।

उभौ— धिक् मूक्खअ, किं तुमं किलादोसि ?

३यः—न क्खु न क्खु, तुह्मे किलादा, ता तहिं गच्छेध, गदुअ अत्तण-केरअं किलादत्तणं णिदंसेध।

१मः—सुत्तलाअ, लज्जेमि क्खु तुह एदेहिं बअणेहिं।

३यः—कधं विअ ?

१मः—अवि प्पच्चक्खोकिदं तुए अज्ज कस्सवि भद्दजणस्स भअ-सूसत्तणं ?

३यः—सुव्वत्तं कहिदव्वं कधेहि।

१मः—सुणाहि जइ सुणिदव्वं, अज्ज इदो णादिपूव्वअं ज्जेव देइए लणचिड़आए पूओवअरणाइं संगहोदुकामो हगे णादिदूल-ट्ठिदे काणणे गदोह्मि

३यः—जाणिदं किं तहिं ?

१मः—तहिं क्खु पस्सन्तस्स ज्जेव मह दावग्गो प्पज्जलिदो सव्वं काणणं दहिदुं।

उभौ—अहो प्पमादो प्पमादो। तदो तदो ?

१मः—तदो किल सिमसिमिज्जन्तो अग्गी जाव अलसं दहिदुं पउत्तो, दाव ज्जेव केणवि सप्पेण कलुणं कलुणं तदो अत्तणो पलित्ताणं प्पत्थिदो सव्वो वणवासिवग्गो।

२यः—अवि किदं केणवि तस्स पलित्ताणं ?

३यः—किं ण्णेदं विसद्दो विअ पुच्छसि, एक्कदो दावग्गी पड़िवक्खो असट्टो उण लक्खणोओ सप्पो ता को एत्थ प्पउत्तो होदि ?

१मः— णं सुणाहि, कधेमि, अकधिदो ज्जेव णिद्दालेसि ?

३यः—कधेहि कधेहि कधं विअ ?

१मः—तस्सिं सम्पत्ते सुदालुणे अग्गिदाहे पत्थअमाणे अ अत्त-पलित्ताणं सप्पे, कोवि लाअसरिच्छाकिदो पुलिसो सिग्घं अभअं कधअन्तो तहिं आअच्छिअ अग्गिमज्भं प्पविट्ठो।

३यः—धिक् प्पमादो। तदो तदो ?

१मः—तदो क्खणमेत्तकेण ज्जेव तं सप्पं हत्थे कदुअ दावग्गिमज्-भादो णिग्गदो सो महापुलिसो।

३यः—सच्चअं ज्जेव महापुलिसो असधा को वा अत्तणकेलअं जीअं संसअगदं कदुअ पलकेलअं जीअं लक्खिदुं कामेदि। अध कहिं प्पट्ठिदो सो ?

१मः—सुणाहि, दाणिं तस्स सप्पस्स खलिअत्तणं।

३यः—दट्टो सो महापुलिसो ?

१मः अधइं जावज्जेव तस्स दसमो चलणपादो दाव ज्जेव सो दट्टो अङ्गालअसरिच्छाआलो विलूत्तो जादो।

३यः—मए पढ़मं ज्जेव जाणिदं। किं किदं देण ?

१मः—एत्थ ज्जेव पढ़मं अञ्चलीअं देण सप्पेण दट्टो वि ण सो विस विआलं गदो क्खणादो ऊद्धं सप्पं पलिहलिअ यधागदं प्पट्टिदो ; पुणो अत्तणकेलअं सलोलं पेक्खिअ किंपि

विभाविअ अबलं अलसं अहिधाविदो। पच्चूसणसमए अ जदो बणादो सो आअदो तं बणं उद्दिसिअ बिसज्जिदाइं अच्छि-सलिलाइं ।

३य:—एदेण आणामि जं तहिं तस्स महन्तो अणुलाओत्ति ।

१म:—अधइं ता ईदिसं गामीणस्स बि साहसं पेक्खिअ बिह्मअ गोअलं गदोह्मि ।

३य:—को एत्थ संसओ ?

१म:—ता एदाइं बिभाविअ एहि भअं पलिहलिअ कज्जेसुं लग्गेह्म ।

३य:—का गइ ? एध, तधा कलेह्म ।

१म:—साहु साहु ता एध । ( निष्क्रान्ता: )

( प्रवेशकः )

ततः प्रविशति उन्मत्तवेशमास्थाय दमयन्ती

दम—( सविषादम् ) हा हा गतः, सुदूरं गतो मे प्राणनाथः चिराय मन्दभागिनीं मां परिहाय क्वापि गतः, न पुनरागमिष्यति ? न पुनस्तस्य दर्शनं लप्स्यते ? हा हतास्मि । ( सवितर्कम् ) किंनु खलु, न पुनरागमिष्यति ? नहि, नहि, नेवं कदापि सम्भवति । अचिरमेव मे आर्य्यपुत्र आगमिष्यति, अचिरमेव सुमधुरसम्भाषणेन माम् आनन्दयिष्यति, अचिरमेव लोलाश्रुमलिनं वदनं मे परिमार्जयिष्यति, नाथ, किमधिकमपेक्षसे ? पश्य एतावता कालेन कीदृशो संवृत्तास्मि, किम् अद्यापि न ते प्रत्ययः । एहि प्राणेश्वर, सत्वरं सम्भावय माम् । अथवा ममेव क्षुत्पिपासापरिपीड़िताया निर्वृतिकामो दूरं गतोऽसि, कियद्दूरं गतोऽसि ? अपि तत्र न प्रविशन्ति मे मन्दभाग्यायाः करुणरुदितानि ? अथ ते गतिं जानीयाम् ? कं पृच्छामि ? भवतु एष दृश्यते गगनाग्रचुम्बी शैलराजः, एनं पृच्छामि, शैलराज, गगनस्पर्शिना शिखरेण सर्वं जगत् परिपश्यसि, तत् कथय कुतो दमयन्त्याः प्राणेश्वर इति ? किं ब्रवीषि कुतो दमयन्त्याः प्राणेश्वर इति ? हाहा ! तत्रास्त्येव ? हा हतास्मि । ( मूर्च्छति )

( ततः प्रविशति शीर्णकायो मलिनवेशः कलिः )

कलिः—मूढ़े, कियानयमवधिः ? परमवशिष्टं वर्त्तते, अस्मान- पहाय नलहतकं श्रितासि ? तदनुभवेदानीं करालस्य कलेः कोपविजृम्भितम् । मूढ़े, अद्यापि पातिव्रत्येन माद्यसि, पश्येयं कीदृशस्ते पातिव्रत्यमहिमा इति । धर्म्म, क्वासि ? विवेक, अपि साम्प्रतं नोपसरसि ? तत् श्रूयतामिदानीं श्रोतव्यम्—

वर्ज्यतां कलिविरोधि मानसं,
प्राप्यतां शुभफलं सनातनम् ।
आश्रितेषु करुणावलम्ब्यताम्,
अन्यथा निजमनिष्टमूह्यताम् ॥

यद्यपि नलशरीरे कृतवसतिः कर्कोटकविषज्वालया दग्धो भवामि, तथापि नाध्यवसायो लघूक्रियते—

यावद्धर्म्म ! प्रभावास्ते निःशेषं न क्षयं गताः ।
तावन्मे यत्नविश्रामो नैवास्ति न भविष्यति ॥ (निष्क्रान्तः)

दम—( संज्ञां लब्ध्वा ) अस्त्येव, अस्त्येव, कुतोऽपि अस्त्येव, अनार्य्य- शील, एतावदवस्थां गतया मया सह क्रीड़सि ? धिक् मूर्ख, सत्यं ब्रूहि क्व मे प्राणेश्वर इति । ( श्रुत्वा ) अये क्व मे प्राणेश्वर इति यथोक्तं ब्रवीति ? तदयं प्रतिशब्दः । अहो भ्रान्तिः ! शैलस्य अचेतनतापि मया नोपलक्षिता ! तत् किमिदानीं करोमि ? कं पृच्छामि, को मे आर्य्यपुत्रस्य गतिं निवेदयेत् ? ( वृक्षमुपसृत्य ) अयि वनदेवते, अपि न जानासि त्वमपि, कुतो मे—( इत्यर्द्धोक्ते ) अये एष भीमा- कृतिः कृष्णसर्पः ! हा हा हतास्मि, एष मामभिद्रवति, नाथ, क्वासि ? रक्ष्यतामियं ते दमयन्ती कृष्णसर्पमुखात् कान्तारे ! एष सन्निहित एव ! ( अपसृत्य ) अहो इतोऽपि मामभि-

द्रवति! नाथ, प्राणेश्वर, अद्यापि दूरे वर्त्तसे? शूरोत्तम, एषाहं न भवामि! (अपसरति) हन्त! निराशास्मि जीविते, इतोऽपि मामभिद्रवति! हा नाथ, हा भैमीजीवित, हा शत्रुमर्दन, (मूर्च्छति)।

(नेपथ्ये) "अप्पमादं णिक्खिब सले" "एसो कप्पिदबिग्गहो पड़िदो सप्पो" (सर्पः शरखण्डितदेहः पतति।)

(ततः प्रविशन्ति सशस्त्रास्त्रयः किराताः)

१मः—अले केरिसो महासलीलो सप्पो, मह बि सम्पदं इमं पेक्खिअ भअं जाअदि।

२यः—अदो ज्जेब मए ण सलो णिक्खित्तो!

३यः—तदो ज्जेब मए बि!

१मः—अध कहिं गदा क्खु सा इत्थिआ?

२यः—मह बि तह ज्जेब पह्णओ?

१मः—एत्थ ज्जेब कहिं बि लुबिस्सदि, ता अन्नेसह्म।

३यः—अले किं अह्माणं ताए इत्थिआए? सा क्खु जहिं तहिं बट्टदु, अह्माणं कज्जं अह्मेहिं किदं, ता सम्पदं गच्छेह्म।

१मः—अली, जइ तुह णत्थि ताए पओअणं, तदो तुमं बच्च, ण क्खु अह्मे गच्छेह्म, मुत्तलाओ क्खु तुमं, किं णु अह्माणं तुए सह एक्कत्तणं होदि?

३यः—एव्वं ण मह इत्थिआए अत्थो, ता हगे गमिस्सं।

उभौ—को अत्थओ? सुहं बच्च।

३यः—(परिक्रामन्) दुट्टआ, दुम्मणुस्सआ, चिट्ठध मुहुत्तअं, जाव तुह्माणं इत्थिआए पओअणं प्पदंशेमि, ता तुलिदं तुलिदं गमिस्सं। (त्वरितं निष्क्रान्तः)।

१मः—अले बज्जहत्तअ, पेक्ख पेक्ख, सा क्खु इत्थिआ सोबण्णपड़िमा बिअ भूमिए पड़िदा चिट्ठदि, ता एहि पेक्खह्म।

२यः—अले, पलम-लमणिज्जं एदाह इत्थिआह लूवं, ता इच्छेमि इमं अंकगदं कादुं।

१मः—अले, को तुमं एदाह प्फंसे? मए क्खु किह्लसप्पं व्वावादिअ एसा जीवाबिदा, ता एत्थ मह ज्जेव अहिआलो।

२यः—कधं विअ? अह्मे इध मिलिअ पट्ठिदा, जं जं आसादइदव्वं तं तं सव्वं अह्माणं सव्वाणं ज्जेव। ता एत्थ मह वि अहिआलो।

१मः—दुज्जाद, तुमं अत्तणकेलकं बलं ण ओधालेसि?

२यः—कधं ण ओधालेमि?

१मः—केरिसं दे बलं?

२यः—अध तुह बि केरिसं?

१मः—मह बलं ण आणासि?

२यः—कधं ण आणामि? तुए गोहिआ मालिदा, मिओ मालिदो, किह्लसप्पो अ मालिदो।

१मः—होदु अलं बाआए, जइ इमं कामेसि, ता समलव्वाबालं कलेहि, जाह बिअओ सो ज्जेव अहिआलो हुबिस्सदि।

२यः—एव्वं? (उभौ नियुद्धं कुरुतः, प्रथमः लतापाशेन द्वितीयं वध्नाति)

१मः—चिट्ठ, जाव दाणिं अहिआलसलिच्छं निव्वट्टेमि। (भैमीमुपसरति)।

२यः—अह्महे! दढं क्खु बज्झोह्मि, ता का गइ?

१मः—अम्मो लमणिज्जं लूवं एदाह इत्थिआह। होदु आमन्तेमि णं। हण्ड चित्तचोलिए, उट्ठेहि उट्ठेहि, एसे हगे तुह चेड़ए।

दम—(संज्ञां लब्ध्वा) नाथ, नाथ, सर्पोऽयं प्रसरति, क्वासि, (उत्तिष्ठति) नाथ, एषाहं (अर्द्धोक्तौ दृष्ट्वा अपसृत्य) अये, को नु खल्वेषः?

१मः—भोलु कुदो अज्ज बि सो सप्पो ? सो मए खण्डत्तो कप्पिअ मालिदो । ( उपसरति )

दम—( अपसृत्य ) उज्जीवितास्मि, तत् को भवान् ?

१मः—( सगर्वं ) हगे क्खु किलादलाअस्स सेणाबइ ।

२यः—ण क्खु, ण क्खु, एसो किलादलाअस्स चेड़ओ ।

१मः—बज्जहत्त, अलं बाआए जइ अत्तणकेलअं जोबिदं पलिप्फुलन्तं इच्छेसि ।

२यः—बज्भो ह्मि, ता का गइ ?

दम—सेनापते, महानयमुपकारः कृतः, तत् पृच्छामि कथमयं वद्ध्यो दृश्यत इति ।

१मः—मए सह विलोधो किदोत्ति मए ज्जेव बज्भो । ( शृङ्गारभावं नाटयन् उपसरति )

दम—( स्वगतम् ) अये साकूत इव एष दृश्यते, तत् किमिदानीं करिष्ये ? ( प्रकाशं ) भद्र, सम्प्रति विसर्जय मां यथेष्टं गन्तुम् । ( अपसरति ) ।

१मः—उप्पललोअणे, बासु, कधं ओसलेसि, एसे हगे तुह चेड़ए, ता अणुमस्से हि किं तुह्य प्पिअं कादब्बं, तुह लूबं पेक्खिअ उम्मत्तोह्मि संबुत्तो ।

दम—(स्वगतं) हा धिक् ! हा धिक् ! यदेव चिन्तितपूर्वं तदेव भाग्यादुपनमति ! ( प्रकाशं ) किरातपते, किमिदं ब्रवीषि ? विसर्जय मां यथेष्टगमनाय । सर्पविनाशनेन कृतोपकारः सम्प्रति एवमुपकारं प्रदर्शय । कल्याणमयं ते जीवनं भविष्यति, देवानामसीमां कृपां लप्स्यसे ।

१मः—वासु, किं एब्बं तुमं भोदा ? ण क्खु अणभिसा किलादजादो कामवुच्चन्त ।

दम—( कर्णौ पिधाय ) दुष्ट, हताश, किरात, सत्यमेव किरातोऽसि,

हा नाथ, हा मदेकजीवित, हा त्रिलोकवीर, क्वासि ? एषाहं विपन्ना! अहह, अशरणास्मि परिभूतास्मि! देवि, दाक्षायणि, अपि सुप्तासि ? भगवन् भूतनाथ, किं न शृणोषि रुदितं मन्द-भागिन्याः ?

१मः—वास्तु, किं णिप्फलं आक्कन्देसि, एहि, अलं निब्बन्धेण। (उपसरति)।

दम—हा हा अशरणास्मि, हा हा हतास्मि, कः कोऽत्र रक्ष मां किरातपरिभूताम्। हा हा किमत्र न कोऽपि ?

१मः—हाः! हाः!! हाः!!! एत्थ ण कोबि। (दमयन्तीं स्प्रष्टुमोहते)।

(ततः प्रविशति शरासनहस्तः किरातराजः)

किरातराजः—दुट्ट, दुम्मणुस्स, एत्थ ण को बि? अत्तिए, मा भाआहि, एसे हगी किलादवइ तुह लक्खणत्थं उबट्ठिदो।

१मः—(ससम्भ्रमं अपसृत्य स्थितः) अह्महे भट्टा आअदो? ता एदं सुत्तलाअस्स बिलसिदं, भोदु पेक्खिस्सं दाब णं।

कि-राजः—अले सिलापुत्त, तुए एसा इत्थिआ पलिभूदा? (प्रथमः वेपते)।

२यः—महालाअ, अधइं, एसे हगेबि एदेण ज्जेब मणोलधबिलोधी त्ति कदुअ बज्झो।

कि-राजः—धिक् सिलापुत्त, अणज्ज, दुलाआल, एब्बं सम्बुट्टोऽसि।

१मः—पसीददु पसीददु महालाओ!

दम—अये, को नु खल्वेष देवप्रकृतिः? अहो परिपूता अनेन सर्वा किरातजातिः।

कि-राजः—धिक् अज्ज बि पसादं कामेसि? तुमं मए लणचण्डिआए बलिसंगहं उद्दिसिअ बणेसु पेसिदो, तं सब्बं बिसुमलिअ दूध इत्थिआं पलिहबेसि, ता चिट्ट जाब सलं णिक्खिबिअ तुह उबउत्तं दण्डं धालेमि।

१मः—मा क्खु मा क्खु मं मालेदु महालाओ। ण हदो वरं हलिसं कलइस्सं।

कि·राजः—पाव, अज्जवि जोविदं कामेसि ? कलणिज्जं उज्झिअ असलणां पदिब्वदां इत्थिआं पलिहुबिअ पुणोबि जीविदं कामेसि ? दुज्जाद, किं अत्तणकेलअं दण्डं सअं ज्जेब ण पत्थेसि ? तुह पसादं कलेमि ? णहु णहु, तुमं मालिदब्बो, सच्चअं मालिदब्बो, अणधा तुह बुत्तन्तं अणुसलन्तो अवले बि ईरिसं अकज्जं कलिस्सदि त्ति। ता सुत्थिलो होहि। अधबा चिट्ठ, क्खणादो अणन्तलं तुमं अग्गीहिं दाहिदब्बो।

१मः—हा हदोह्मि मन्दभाओ। (पतति)।

कि राजः—अले बज्जहत्त, तुमं कधं एदेण संजमिदो ?

२यः—भट्टके, मए एसे दुलाआले बाधिदे त्ति कदुअ।

कि·राजः—किं णु क्खु ? बालिदेत्ति कदुअ ? असच्चप्पिअ, अत्तणों अबलाहं णिगूहेसि ? चिन्तेसि, मए ण सुदं त्ति ? अणज्ज, दुम्मणुस्स, तुह लसणा खण्डसो कप्पिदब्बा ! सलोलं अ बुक्केहिं खज्जइदब्बं। (दमयन्तीमुपसृत्य) दालिए, तुमं मह पुत्तिआसि, ता एहि उड़अं गदुअ मह पुत्तिआए सह तुह मिणेहं उप्पादेमि। जादे, सा बि तुमं बिअ सुलुबा, सा तुह पच्चक्खं गदा सुहबिसेसं गमिस्सदि, तुह सब्बो बुत्तन्तो उण तहिं सब्बेहिं कुड़ुम्बएहिं मिलिअ सुणिदब्बो। ता एहि, अले सिलापुत्त, अले बज्जहत्त, एध तुह्मे, जाब तहिं गदुअ तुह्माणं हिअअकड़ुअं दण्डं धालइस्सं !

उभौ—(भयं नाटयतः)।

दम—तात, यदि अभयं वितीर्य्यते, तदा किमपि वक्तुकामास्मि।

कि·राजः—जादे, किं बिअ, जादे, तुमं मह धम्मपुत्तिआ सम्बुत्तासि, कुदो दे भअं, ता कधेहि।

दम—तात, भवता अनयोः प्राणप्रदानं क्रियमाणमिच्छामि ।

कि-राजः—वच्छे, किं एव्वं भणेसि, एदेहिं महन्तो अवराहो किदो, ता कधं एदाणं मोक्खो ?

दम—तात, दुहितुः स्नेहेन ? तात, अहं तव धर्मदुहिता, अहं सुतरामिच्छामि तथा, तत् पूरय मे प्रथमप्रार्थनाम् ।

कि-राजः—अध जइ इदो ऊढं ईरिसं करेन्ति ।

दम—तदा नाहं निर्बन्धवती भवेयम्, सकृदेव क्रियतामेतयोः प्राणदानम् ।

कि-राजः—का गइ ? मुक्का एदे तुह धम्मपुत्तिआह सिणेहेण सिलापुत्त, बज्जहत्त, ईरिसो एसा तुह्मेहिं परिहवं णीदा, ता धिक्, दाणिं बच्चध, लद्धे तुह्मेहिं जीविदे एदाह प्पसाएण, इदो अवधाणं देध जधा इदो वरं एव्वं ण उण कादव्वं त्ति ।

उभौ—जीवह्म, अम्मो से महत्तणं, अम्मो से करुणा ! किं णु क्खु अह्मेहिं देवदा पलिहवं पाविदा । ( निष्क्रान्तौ )

कि-राजः—जादे, एहि उड़अं उजेव गच्छह्म ।

दम—यथाज्ञापयति तातः । ( परिक्रामन्तौ ) भगवन् भूतनाथ, नूनं दयसे, भगवति दाक्षायणि, श्रुतं त्वया करुणरोदनं मन्दभाग्यायाः । ( निष्क्रान्तौ )

( ततः प्रविशति विवेकः )

रे जीवाः सुकृतेषु मानसरतिं कुर्वन्तु नक्तन्दिवं,
लोके नो सुकृती प्रयात्यवनतिं नित्यं तदोयोन्नतिः ।
आपातेन यदप्यनीप्सिततमं पुण्यात्मनां द्योतते,
तच्चित्तस्थिरतापरीक्षणकृते धात्रैव निष्पाद्यते ॥

अत एवाद्य निषधमहादेवी दमयन्ती नलेन निषधेश्वरेण विना कृता अशरणा एकाकिनी अरण्ये किरातेन अभिभूयमाना

किरातराजेन परिरक्षिता। अहो सुतरां दयावती दमयन्ती, या एवं प्रतिकूलवर्त्तिनोरपि किरातयोः कल्याणाय किरातराजं याचितवती। अथवा नेदमाश्चर्य्यं निषधमहादेव्याः! यस्या भर्त्ता नाम—

कर्कोटकं रक्षितुमग्निमध्यात् प्रविष्टवान् दीप्तदयो हि तस्मिन्।
मनोरथानामयनञ्च भैमीं यो देवसात्कर्त्तुमियेष दौत्यात्॥

सम्प्रति तु निराबाधा दमयन्ती। किरातराजो यदैव विदर्भदुहितरमिमां ज्ञास्यति, तदैव तां विदर्भान् प्रापयिष्यति। तदेष प्रबन्धो दमयन्त्या नलस्य च सौभाग्यवशादेव सम्वृत्त इति। भवतु इदानीं गत्वा सर्वमिदं वृत्तं महाराजाय धर्म्माय निवेदयामि। (निष्क्रान्तः)।

(ततः प्रविशति मोहः)

मोहः—हा धिक् कष्टं! यत्र यत्रैव महामहिमशालिनः अस्मदेकसमाश्रयस्य कलेः प्रभावं प्रसारयितुं यते, तत्र तत्रैव विफला मे प्रयत्नपरम्परा। अद्य मदीयस्य प्रयत्नस्य यथा वैफल्यं, तथा केन वा सम्भावितमासीत्। कुतोऽपि सहसा समुदितो भीमप्रभञ्जन इव दुरन्तः किरातपतिः, येन शिथिलतामाससाद मे दुर्दमनीयः पराक्रममहिमा। तत् किं नु खलु साम्प्रतं करणीयम्? भवतु प्रभुं गत्वा संवादयामि।

(निष्क्रान्तः)।

पञ्चमाङ्कः समाप्तः।

---

## षष्ठाङ्कः

( ततः प्रविशति गृहीताध्वगवेशो विदूषकः )

विदू—अहो वयस्यमन्वेष्टुं कियतो देशान् कियन्ति काननानि कियतो वा शैलगह्वरानतिक्रम्य अयोध्यां प्राप्तोऽस्मि। हा वयस्य, कथमेवं ते मतिविपर्य्ययो जातः, यत् सहधर्म्मचारिणी-मेकाकिनीं वने विहाय दूरे प्रस्थितोऽसि ? अहो राजोचित-सुखमात्रयोग्यस्त्वं यत्र तत्र कियन्ति वा दुःखानि अनुभवसि ? वयस्य, अलमद्यापि आत्मप्रच्छादनेन, एहि, साम्प्रतं प्रतिष्ठस्व विदर्भेषु, तत्र त्वामन्तरेण निषधमहादेवी दमयन्ती नितरां परिखिद्यमाना वर्त्तते, तत् क्वासि ? अहो पातिव्रत्यमहिमा तत्रभवत्या दमयन्त्याः, येन नीचप्रकृतिः किरातोऽपि वने देवीं लब्ध्वा दुहितरमिव समुपचर्य्य विपत्पातमुक्तामिमां विदर्भेषु प्रापितवान्। किरातराज, धन्यस्त्वया किरातान्व-वायः। यदि त्वामीदृशं नैषधः पश्येत्, तदा त्वयि परमप्रणयेन तस्य हृदयं द्रवीभूतं भवेत्। अहह, कष्टः खलु पतिव्रतानां पत्या सह वियोगः ! येन एवं विपदो मुक्तापि देवी दमयन्ती निरन्तरमप्रसन्ना परिलक्ष्यते। केवलं मलिनानना नयनाश्रूणि परिमुञ्चति, उपचारान् परिहरति, सर्व्वमेव सुखोपकरणं कालकूटमिव तस्या मनसो वेदनामेव निर्व्वर्त्तयति ! देवि, दमयन्ति, किञ्चिदपेक्षस्व, यथाकथमपि नातिचिरं निषधनाथं प्रियवयस्यं विदर्भेषु प्रापयिष्यामि। पतिव्रते, कियच्चिरं पति-व्रतायास्ते दुःखभोगः ? अथवा निपुणायास्तत्रभवत्या दमयन्त्याः स्वयमुद्भाविता द्वितीयस्वयंवरणवार्त्तैवात्र परम-

साहायकं सम्पादयिष्यति। तथाहि यदैव प्रियवयस्यो मे स्वप्रियतमाया धर्म्मपत्न्या दमयन्त्या द्वितीयस्वयंवरणवार्त्तामाकर्णयिष्यति, तदैव दुःखेन वा कौतूहलेन वा विदर्भेषु पदं करिष्यति, तदचिरादेव सम्भविष्यति देव्या अभिप्रेतार्थसिद्धिः। श्रुतञ्च मया अयोध्यामुपगतेन यथा ऋतुपर्णस्य अयोध्याधिपतेरश्वाधिकारे कश्चिदश्वपालो नातिचिरं नियुक्तः, स च लोकविलक्षणामश्वविद्यामधिकरोतीति ? तत् किमश्वविद्यापारंगतो मे प्रियवयस्य एतस्मिन्नेव देशे लब्धव्यः ? भगवन् भूतभावन, प्रसीद, देहि मे दर्शनं प्रियवयस्यस्य, एवं कृते षोड़शभिरुपचारैस्त्वां परिपूजयिष्ये। तद् भवतु अलमत्र विलम्बेन, यावत् सत्वरं राजभवनमेव प्रविशामि ( निष्क्रान्तः )। विष्कम्भकः ।

( ततः प्रविशति विकृतवेशो नलः )

नलः—( स्वगतम् ) हा कष्टं! अतिनृशंसोऽस्मि मन्दभाग्यः! मन्ये मदपेक्षया हिंस्रजन्तवो वा दस्यवो वा राक्षसा वा पिशाचादयो वा कोमलतरं हृदयं समाश्रयन्ति, नहि ते नलहतक इव एकाकिनोमर्द्धवाससं निरवलम्बां सुषुप्तां भार्य्यां विपदामाकरे कान्तारे परिवर्ज्जयितुमोहन्ते। हा हा हतोऽस्मि! विपर्य्यस्तः संसारः, जोर्णारण्यं जगत्, निरस्ता आशा, निरन्तरं विषज्वालापर्य्याकुलोऽपि न मे दग्धदेहः प्रशाम्यति! कियानवधिरस्य दग्धशरीरस्य ? तत् किमात्मनैव आत्मानं व्यापादयामि ? नहि, नहि, यावत् समाचरितं तावदेव पर्य्याप्तम्, अलमतःपरमपि पापप्रवर्त्तनेन। किन्तु किं करोमि ? दावानलेन दह्यमानमिव निरन्तरमन्तःकरणं मे परितप्यते। हा देवि, किमद्यापि जोवितासि ? अथवा कुतोऽद्यापि तस्या जोवनाशा, हिंस्रजन्तुशताकोर्णे कान्तारे नलहतकेन एका-

किन्नो विसृष्टा सा नूनमचिरादेव व्यापादिता । हा ! हा !! मूढ़ नल, किमिति प्रागेव वनप्रस्थानात् न विपन्नोऽसि ? नृशंस, किमिति धर्म्मपत्नीं स्वदोषादेव मुक्तजीवितां जानन्नपि समुच्छ्वसितं धारयसि ? अहो विवेकशून्यता ! प्रतिपदमेव धिक् त्वामात्मश्रेयोऽवमानिनम् । अहह, किं करोमि, क्व गच्छामि, कस्य वा हृदयवेदनां निवेदयामि ? आत्मप्रकाश-शङ्कया मुक्तकण्ठं रोदितुमप्यशक्तोऽस्मि । हा ! हा !! एषा दमयन्ती विजने कान्तारे भुजङ्गभीता सोत्कण्ठं रोदिति ? एषा हिंस्रजन्तुसन्निपातशङ्किता दिशो द्रवति, एषा मां कातर-मामन्त्रयते, अहं पुनर्निरुपद्रवो राजोपचारसेवितो न स्मराम्यपि तत् । नृशंस नलहतक, गम्यतां गम्यतां तत्रैव, यत्र ते धर्म-पत्नी प्रतिपदं विपत्पातभीता दिशो द्रवति, किमिति ता-मुपेक्षसे ? मूढ़, दया मास्तु, सनातनं धर्म्ममपि विस्मृतवानसि ? तत् सत्वरं गम्यताम् । (गच्छन् पुनः प्रतिनिवृत्तः) देवि, अपि विदर्भेषु प्रस्थितासि ? भगवन् भूतभावन, अप्येवं संवृत्तम् ? नहि, नहि, नातःपरं परिचिन्तयिष्यामि, यथा वज्रमयो भूत्वा प्रियां कान्तारे विसृष्टवानस्मि, तथैव अद्यापि वज्रमयो भविष्यामि, यस्य मम—

एकातपत्रा प्रभुता पृथिव्यां चिरानुरक्ता प्रकृतिः समस्ता ।
लयं गता हन्त विनश्वरत्वात् प्रियंवदा भीमसुतापि काले ॥

मूर्ख नल, धिक्, विलयं गता विदर्भराजनन्दिनी, तथापि त्वम् अद्यापि जीवसि ?—

या त्वां विना जीवति नो मुहूर्त्तं, त्वमेव यस्याः शरणं चिराय ।
विधूय देवानपि याऽवृणोत्त्वां, सेयं विनष्टा वत जीवसि त्वम् ? ॥

तदलीकमेवेदं, न मे प्रियतमा विलयं गता, सा हि सम्प्रति—

पित्रोरङ्कमुपाश्रित्य तदीयस्नेहधारया।
संवर्द्धमाना सुचिरं विवशा मामपेक्षते॥

प्रिये, किम् अद्यापि मां स्मरसि? योऽहं भवतीं सुप्ताम् अशरणां कान्तारे विसर्ज्य सुदूरं प्रस्थितः, त्वन्तस्यापि मे स्मरसि? देवि, क्षम्यतामेष धृष्टः—प्रिये, यदि कदाचित् त्वया सह—(अर्द्धोक्ते) अहो किमेवं भवितव्यम्? प्रतिकूलवर्त्तिनि दैवहतके कथमेवंविधस्य वस्तुनः सम्भावनापि। अहह, विवशोऽस्मि, नातःपरं चिन्ता प्रसरति, भगवन् भूतभावन, दीयतामात्मधारणसामर्थ्यम्, अहह! (तूष्णीं स्थितः)।

(ततः प्रविशति प्रसन्नान्तरो विदूषकः)

विदू—किं नु खलु सम्भावना मे विफला भवितुमर्हति? मन्दारक, अद्यैव लब्धस्त्वया तावतां परिश्रमानामर्थः। नूनमितेनैव मे प्रियवयस्येन भवितव्यम्! कुतः? आदौ तावत् अश्वविद्यायां तथा चातुर्य्यं, अनन्तरञ्च तादृशं शरीरसंस्थानं, ततः परञ्च तदुचितं परिक्रमणादिकम्। अन्तरालमास्थाय यथा यथा परिलोकितोऽस्य भावपर्य्यायस्तथा मन्ये देव्या विसर्जनकृतो विषादसम्भ्रम एव नितरामस्य मानसं व्याकुलीकरोति। अथ कथम् ईदृशी वर्णपरिवृत्तिः कृता? तत् किं स्वरूपप्रच्छादनाय विमर्दितनीलीसम्पर्कः कृतो भवेत्? अथवा वयस्य, यथा तथा वा प्रयत्नपरो भव, मन्दारकं न प्रवञ्चयितुं पारयिष्यसि। भवतु तावत् स्वरेण पुनर्लब्धविशेषो भवामि। (नलसमीपे परिक्रम्य प्रकाशं) भद्र, एषोऽहमतिथिः प्राप्तः।

नलः—भगवन्, अनुगृहीतोऽस्मि, इदमासनम्, आस्यताम्, कः कोऽत्र?

(प्रविशति पुरुषः)

पुरुषः—आणवेदु भट्टा।

नलः—तावत् परिचर्य्यतामेष भगवान् व्यजनवातेन यावदहं पाद्यादिकमस्य उपहरामि।

पुरुषः—यह्न आणवेदि भट्टा ( तथा करोति )।

विदू—अलमलं सम्भ्रमेण, भवतः सूनृतया वाचैव विरतो मे श्रमभारः, तद्भवानपि इहैव आस्तां, तदेव मे साकल्येन सम्भावनासाधनं भविष्यति। ( स्वगतं ) अये, स एव स्वरसंयोगोऽपि, तत् किमन्यथा भवेत्? मन्दारक, किमद्यापि तूष्णीं वर्त्तसे? नृत्यगीताभ्यां सम्भावय महोत्सवमेतम्, परिष्वजस्व गाढ़ं प्रियवयस्यम्। अथवा एष इव अहमपि आत्मानं प्रच्छादयिष्ये, तत् कथमिवेदं सम्भवेत्? अपि वयस्यनयनयोरात्मप्रच्छादनं सुकरं स्यात्? अथवा अलं चिन्तया, एतावत्कालं प्रियवयस्यविरहेण नानादेशभ्रमणपरिश्रमेण विकृतवेशपरिग्रहेण च अन्यादृश एवास्मि, अन्यथा कथमिदानीमेव वा वयस्यादात्मानं परित्रातुमपारयिष्यम्।

नलः—( पुरुषं प्रति ) अरे गच्छ त्वं स्वनियोगमनुष्ठातुम्, एषोऽहं स्वयमेव भगवन्तं परिचरेयम्।

पुरुषः—( प्रणम्य ) यह्न आणवेदि भट्टा ( निष्क्रान्तः )।

नलः—( समीपे उपविश्य वीजयन् स्वगतम् ) अये! एष मन्दारकः प्राप्तः? कथम्? किन्नु खलु विदिता मे गतिरनेन? यथा तथा वा भवतु, सहसा नात्मनः प्रकाशं करिष्ये।

विदू—अये, मां दृष्ट्वा ससम्भ्रम इव लक्ष्यते, तत् किमनेन प्रत्यभिज्ञातो मन्दारकः?

नलः—भगवन्, सफला अद्य मे गुरुजनाशिषः, येन श्लाघनीयसमागमो भवानतिथिः प्राप्तः। तद् यदि मामनुग्राह्यं मन्यते, तदा स्ववृत्तान्तकथनेन मां निरुत्कण्ठं कर्त्तुमर्हति महाभागः।

विदू—कः सन्देहः ? यदि वृत्तान्तमेव न कथयेयं, तदा किं दूरात् दूरतरं पन्थानमतिक्रम्य भोजनादिबाधामविगणय्य तादृशे परिश्रमे पातितः प्रयत्नपोषित आत्मा ? तदेष पर्य्यायेण कथयामि श्रूयताम्—

नलः—अवहितोऽस्मि । (स्वगतम्) हृदय, किमेवमुत्कण्ठसे ? किमेवं संशयमारोहसि ? सज्जस्व विपत्पातमाकर्णयितुं दैव-क्रमेण शुभसम्पातमन्धस्य दृष्टिलाभमिव मन्येथाः । अथवा प्रतिकूलवर्तिनि दैवपर्य्याये कुतः शुभवार्त्तायाः सम्भावना ? हृदय ! धैर्य्यमवलम्बस्व ।

विदू—महाभाग, अपि अन्यासक्तो भवान् ?

नलः—नहि, नहि ।

विदू—तत् किमिति सुदीर्घः श्वासः, विलुप्तो हासः, मालिन्यस्य च वदने विकासः ?

नलः—नहि, नहि, अवहित एवास्मि, नेदं किमपि, अवहितोऽस्मि प्रस्तूयतां प्रस्तोतव्यम् ।

विदू—( स्वगतं ) वयस्य, मानसं वृत्तं मुखे प्रतिफलतीति मन्दारको जानाति, तत् नेदं किमपि ? ( प्रकाशं ) श्रूयताम्,—अपि जानासि विदर्भेषु कुण्डिनं नाम नगरम् ?

नलः—अथ किम्, जानामि, अस्मदेकाश्रय ऋतुपर्णो नाम राजा तदधीश्वरे राज्ञि भीमे परं प्रणयमध्यास्ते, किं तत्र ? ( स्वगतं ) हृदय, स्थैर्य्यमवलम्बस्व, किमपि श्रोतव्यं ते वर्त्तते ।

विदू—एवं तस्यैव भीमराजस्य दुहिता दमयन्ती—

नलः—( सोत्कण्ठम् ) किं नलेन एकाकिनी कानने त्यक्ता पञ्चत्व मुपगता ?

विदू—शान्तं पापं ! शान्तं पापं ! प्रतिहतममङ्गलं राजदारिकायाः !

नलः—तत् किमद्यापि जीवति ?

विदू—महाभाग, कथमेवममङ्गलं भवानाशङ्कते, कथं न सा जीवेत् ?

नलः—महाभाग, अस्माभिराकर्णितं यथा दमयन्ती एकाकिनी कानने पत्या विसर्जितेति, तत् कथमस्या एकाकिन्या हिंस्र-श्वापदपर्य्याकुले गभीरे कान्तारे जीवितं निर्व्विघ्नं स्यात् ?

विदू—महाभाग, न केवलं जीवति, साम्प्रतं पुनः स्वयंवरणव्यापार-मङ्गीकुरुते।

नलः—धिक्, अलीकमेतत्। ब्राह्मण, किमेवं मिथ्या प्रलपसि ?

विदू—किमभिसन्धाय ?

नलः—तत्र तु भवानेव प्रमाणम्।

विदू—अलीकमेतदित्यत्र किमु भवतो हृदयं प्रमाणम् ?

नलः—अथ किम् ?

विदू—कथमिव ? अपि नितरामभिज्ञो महाभागो दमयन्तीवृत्ते ?

नलः—(संवरणं नाटयित्वा) भगवन्! किमत्र विशेषतो द्रष्टव्यं, पति-व्रताः खलु पातिव्रत्यजीविता भवन्ति इत्येतदेवात्र पर्य्याप्तम्।

विदू—सत्पुरुषा अपि धर्म्मपत्नीपरित्यागविमुखा भवन्ति।

नलः—कोऽत्र संशयः ?

विदू—यद्येवं, तदा यदि नलेन धर्म्मपत्नीपरित्यागे विमुखता नाव-लम्बिता, तदा कथं दमयन्ती पतिव्रताव्रतं वृणुयात् ?

नलः—( स्वगतं ) अये विशेषेण अधिक्षिप्तोऽस्मि, भवतु एवं तावत्। ( प्रकाशं ) भगवन् नेदं युक्तमभिधीयते। कुतः ?

बालेन मोहाद् यदि वासगेहे
वितीर्य्यते केनचिदेव वह्निः।
तद्दर्शनादन्यजनो विवेकी
किन्त्वत्र तं दीपयते कदाचित् ?

नलो यत् प्रियतमां दमयन्तीं वने विसृष्टवान्, तत्र तस्य मानसो मोह एव कारणं, तन्निदर्शनात् कथमयं समारम्भः ?

विदू—भवतु न्याय्यं वा अन्याय्यं वा, तत्र तु तत्रभवती सनिर्बन्धा राजदारिका दमयन्ती एव प्रमाणम्। वयन्तु केवलं निसृष्टार्था दूता एव विसृष्टाः, किमस्माकं तावत्पर्य्यन्तमनुसृत्य। तत् दमयन्ती स्वयंवरणप्रवृत्तेति अत्र संशयो नास्ति, परं कदा तद् भविष्यतीत्येव प्रष्टव्यम्।

नलः—भगवन्, अपि सत्यमिवेदम् ?

विदू—महाभाग, एवं अश्रद्दधानहृदयो भवान्! अथ आनय तुलसीदलं च मन्दाकिनीसलिलं च ताम्रकं च तिलं च, सर्व्वं स्पृष्ट्वा शपथेन ते विश्वासमुत्पादयामि। पुनः पुनरेव दृढ़ं मया उच्यते, तथापि ते प्रत्ययो नास्ति ?

नलः—अश्रुतादृष्टपूर्व्वे वस्तुनि मनः सहसैव प्रत्ययं नावलम्बते। नवीनः खलु पुनःस्वयंवरणव्यापारः क्षत्रियाणाम्।

विदू—महाभाग, किमिवं नवीन इति विस्मयं प्रकाशयसि, यद्यदेव वस्तु जगति सम्भाव्यते, तत्तत् सर्वमेव प्रथमोत्पत्तिदिवसे नवीनमेव, यद्धि नलस्तदानीं कानने दमयन्तीं परित्यज्य क्वापि गतस्तदपि नवीनमेव। किमितः पूर्वं तथा अनुष्ठितं केनापि ?

नलः—( स्वगतम् ) अहो धर्म्मपत्नीं परित्यज्य सञ्चितो मया महानेव प्रशस्तिवादः, आप्रलयं कीर्त्तिरियं नलस्य पृथिव्यां प्रचरिष्यति। हा धिक् कष्टं! पातितो मया कलङ्ककालिमा सुधाकरनिर्म्मले सुधाकरकुले। अथवा अनुरूपमेव कृतं मया शशाङ्कगोत्रस्य।

———

क्षीरोदसागरभवोऽपि भवाश्रितोऽपि
सर्व्वोच्चदेशनिलयोऽपि विधुः शशाङ्कः ।
तद्वन्मयापि वत तत्कुलकोरकेण
प्राप्तोऽद्य धर्म्मवनितापरिहारदोषः ॥

विदू—भोः ! अलमिदानीं त्वया । त्वन्तु सम्प्रति किञ्चिदिव मनसि कुर्व्वाणो न मां बहुमन्यसे, तदेष गच्छामि । ( गन्तुमीहते )

नलः—भगवन् ! प्रसीद प्रसीद, नैवं सम्भावयितुमर्हसि, कुतो मे भवद्-बहुमानपराङ्मुखता ? केवलं नवीनमिदं वृत्तमिति विचारयत एव तथात्वमनुभूतं भवेत् । भवतु, सानुग्रहं कथ्यतामिदानीं कदायं नवावतारः सम्भवेत् ?

विदू—एवमिदानीम् आगतोऽसि मार्गे, तत् श्रूयतां, श्व एव प्रभाते स्वयंवरणमहोत्सवः । राजदारिका स्वयम् अभिलाषानुरूपं वरं वृणुयात् । एतदेव सुहृदम् ऋतुपर्णं विज्ञापयितुम् अयोध्या-पुरं प्रेषितोऽस्मि भीमराजेन ।

नलः—श्व एव ?

विदू—अथ किम् ।

नलः—अथ कीदृशीयं प्रतारणा ? अपि राज्ञः परीहासार्थमयमुद्यमो भवताम् ?

विदू—कथमिव ?

नलः—अन्यथा श्व एव अयोध्यातो विदर्भेषु गमनाय अद्य निमन्त्रण-मुपनीयते ?

विदू—अस्मत्स्वामिनो जानन्ति यथा अस्ति ऋतुपर्णस्य राजर्षेस्तथा कश्चन सूतो येन परिचालिता रथवाहा मासेन गन्तव्यमपि पन्थानम् एकाहेन समतिक्रामन्तीति, अत एवं प्रवृत्तिः कृता ।

नलः—युज्यत इव। (स्वगतम्) अपि अहमत्र स्थितस्तैः प्रत्यभिज्ञातः स्याम्?

विदू—महाभाग, विशेषेण विश्रान्तोऽस्मि, तदिदानीं राजदर्शनमनुभूय स्वामिनिदेशं पालयितुमिच्छामि।

नलः—वाढ़ं, पालनीयः सर्व्वथा स्वामिनिदेशः।

विदू—महाभाग, भवतो मधुरमधुरो व्यवहारो मां प्रलापयति, अथ कीदृशीं वृत्तिम् उपजीवति महाभागः?

नलः—भगवन्! वेश एव मे किं न पर्य्याप्तो वृत्तिनिर्णये?

विदू—वेशेन तु भवन्तं सूतमिवावगच्छामि।

नलः—अथ किम्। ऋतुपर्णेन राजर्षिणा अहं तदीये अश्वाधिकारे नियुक्तः।

विदू—तत् किं स एव सूतो भवान्?

नलः—(स्वगतं) किं वक्तव्यमधुना? (प्रकाशं) भगवन्, कस्य वार्त्तां प्रस्तौषि

विदू—यो हि मासेन गन्तव्यमेकेन दिवसेनातिक्रामतीति श्रूयते?

नलः—(स्वगतं) का गतिः? (प्रकाशम्) भगवन्, अथ किम्, तमेव मां विज्ञातुमर्हसि।

विदू—तदवश्यमेव भवता गन्तव्यं विदर्भेषु?

नलः—तत्र महाराजस्य ऋतुपर्णस्य आदेशः प्रमाणम्।

विदू—भवतु यदि गम्यते, तदा तस्मिन्नेवावसरे त्वया ज्ञातव्यं, यथा मदुक्तिरलीका वा यथार्था वेति।

नलः—(स्वगतम्) अलीकैव भवतु, देवताप्रसादादुक्तिरियम् अलीका भवतु। प्रिये दमयन्ति, अपि सत्यमेव ब्राह्मणो ब्रवीति? यद्येवं तदा अवसितम् अद्य प्रभृति त्वदीयभावनाप्रसूतमपि सुखं नलहतकस्य। हा हा दमयन्ति, किमिति श्वापदैः कान्तारे न व्यापादितासि? अहो रे! विलीनो जगति पति-

व्रताधर्म्मः, प्रशान्तः प्रणयमहिमा, पार्थिवसुखसात्रसारः संसारः। हा धिक् कष्टं, भगवन् भूतभावन, अपि ब्राह्मण-वचनं मृषैव स्यात् ?

विदू—भो महाभाग, न जानात्येव भवान् लोकव्यवहारम्, अहमत्र वैदेशिकोऽतिथिरस्मि, भवता पुनर्मया सह वचनमकुर्व्वाणेन किमपि अन्यदेव विभाव्यते। अपि भवतामीदृश एव देशाचारः ? हा धिक्! आगमनमात्रेण यथा प्रवृत्तः समादरः, इदानीन्तु तस्य कलापि नोपलक्ष्यते। इतस्तु सुचिरं यावदेव बुभुक्षाव्याकुलस्य मे परिपच्यन्त इव कुक्षिगतानि स्नायुबन्धनानि, तदिदानीं यथाविहितं प्रतिविधीयतामनन्तरं मया राजसमीपमुपस्थातव्यम्।

नलः—भगवन्, क्षम्यतामेष मे भवदतिक्रमजनितो दोषभारः।

विदू—जाठरानलो मुहुर्मां समुद्दीपयति, तदादौ तमेव क्षमां लम्भय।

नलः—भगवन्, अनुगृहीतोऽस्मि, तदेहि, पाकशालामेव प्रविशावः।

विदू—त्वमग्रतो गत्वा पन्थानं दर्शय, अन्यथा अज्ञातमार्गः कथं सत्वरं गच्छेत् ?

नलः—एषोऽहमग्रतो भवामि मामनुगन्तुमर्हति भगवान्।

विदू—तथा। (स्वगतं) देव्या दमयन्त्या यथारोगमौषधं प्रयुक्तम्। बहिर्विकारेण विज्ञायते यथा निरन्तरमेव सा चिन्ता अस्य हृदयमिदानीमाक्रामति। तत् किमयं स एव विदर्भानृपहृत्य स्थिरमानसः स्थातुं शक्नुयात् ? तत् सफलो मे तावान् परिश्रमः। अहह ! वयस्य, कदा पुनस्त्वां पूर्ववत् परिष्वज्य सुखी भविष्यामि ? अथवा यद् प्रात एवास्य तदा कदाचि देषः द्रष्टव्य एव। भवतु इदानीं प्रकृतं निवर्त्तयामि।

नलः—मूढ़ नल ! किमिदानीं शोचसि ? यदि यथार्थवादी ब्राह्मणस्तदा किमन्यं दूषयितुमर्हसि ? कुतः ?

स्वहस्तदत्ताग्निकणैर्निजेच्छया स्ववासशाला स्वयमेव दाह्यते।
तत्कुण्डिनं सत्वर तद्विलोकितुं स्वपौरुषं किन्न विलोकयिष्यसि ?

विदू—महाभाग, किन्नु भवानपि अहमिव अनभिज्ञः पाकशाला-सञ्चारमार्गे, यदेवं विचारयति ?

नलः—भगवन्, कथमेवं स्यात् ? भवानेव शनैः सञ्चारीति स्थितोऽस्मि ?

विदू—भवतु, एहि, यावदिदानीं शशकगतिं लघूकरोमि।

नलः—एतु एतु भगवान्। ( निष्क्रान्तौ )

षष्ठाङ्कः समाप्तः।

---

## सप्तमाङ्कः

( ततः प्रविशति मलिनवेशः कलिः )

कलिः—अये लब्धमिदानीं मया सुचिरादनन्तरं शरीरनिर्व्वाणम्। कुतः ?

विदग्धदेहो नलधर्म्मतेजसा कर्कोटकस्यापि विषेण जर्जरः।
नलस्य देहे सुचिराय संस्थितः प्रयामि सन्त्यज्य तमद्य निर्वृतः॥

अहो सामर्थ्यं प्रियसुहृदे नलाय ऋतुपर्णेन विसृष्टायाः पादपपर्णसंख्यानविद्यायाः। यतस्तुरङ्गविद्याविनिमयेन ऋतुपर्णसमीपतो ग्रहणमात्रेणैव तस्याः तथा सन्तप्तं मे कठोरादपि कठोरतरं शरीरं, येन तावत्कालं विषोढ़कष्टातिशयोऽपि नैव स्थातुमलमभूवं तस्य शरीरे। तथा तापजीर्णाङ्गस्य

यावदेव तस्य पुरतः प्रकाशमगमं तावदेव कलिं मां विज्ञाय व्यापादयितुं समुद्यते कृपाणे कातरं जीवनं याचमानोऽहं कठोरापराधोऽपि जीवनदानेनानुगृहीतः। अहो अस्य महानुभावता! अत एव दमयन्ती देवानवधूय इमं वृतवती यत् सत्यं महान्तं प्रकर्षमेव गृहीतवती। वत्से दमयन्ति, क्षम्यतामेष चिरापकारी दुर्जनः। अद्य न पुनरहं युवयोः सापत्न्यं वहामि, अद्य प्रभृति य एव युवयोर्वृत्तमपि आलोचयिष्यति, तस्याहमपकारं परिवर्जयिष्यामि। वत्से, अद्य विदर्भेषु ऋतुपर्णस्य सारथिरूपेण समुपनतः स ते चिराकाङ्क्षितो जनः, तदाशास्महे यथा पुनरनेन सङ्गत्य आकल्पान्तकालं सुखं भुञ्जीथाः। भवतु, इदानीं साक्षादेव कुण्डिनपुरे युवयोः शुभसमागमं पश्येयम्। वयस्य धर्म्म, असकृद् वृथैव मया तर्जितोऽसि, अद्य तवैव विजयो जातः, त्वमेवाद्य दिष्ट्या वर्द्धसे, कुतः?

तावत्कालं चेष्टमानः कलिस्ते गर्व्वध्वंसं कर्त्तुकामोऽहमासम्।
माहात्म्यानां सम्प्रचारेण काले गर्वोत्कर्षं दीपयाम्येव बाढ़म्॥

भवतु पश्यामि सम्प्रति कीदृशो दम्पतिवृत्तान्त इति।

(निष्क्रान्तः)

## विष्कम्भकः

---

(ततः प्रविशति गृहीतसमुज्ज्वलवेशो नलः)

नलः—(दीर्घं निःश्वस्य) अहो भाग्यपद्धतिर्जीवानाम्, अहो क्षणभङ्गुरता संसारबन्धस्य, अहो चाञ्चल्यं नारीचरित्राणाम्!

कुतः?

मद्भृत्याः कति भीतभीतहृदयाः पूर्वं मदाज्ञास्थिताः
कार्य्येषु प्रगता वताहमिकया सिद्धिं गताः श्रेयसीम्।

हा हा ! सोऽहमिहाद्य सूतपदवीलाभेन जातोत्सवो
भाग्यानां गतयो न बोधविषयाः पद्मोद्भवस्यापि वा ॥

अपि च—गतं राज्यं दूरे प्रकृतिरपि रागैर्विरहिता
गतो बन्धुर्वैरं प्रसरति महामोहतिमिरम् ।
यदासोदानन्दप्रचयरचनापाटवमयं
तदेतत् कालेन प्रकटयति दुःखैकलसितम् ॥

अपि च—या मां क्षणं दृष्टिपथादतीतं
विज्ञाय मेने जगदेव शून्यम् ।
हा हन्त ! सैवाद्य कथं प्रवृत्ता
पत्यन्तरं योजयितुं स्वदेहे ॥

हा धिक् कष्टं! देवि, अपि सत्यमेव सङ्कल्पवती त्वं तादृशे कर्त्तव्ये ? देवि, अपि विस्मृतमिदानीं त्वया समग्रमेव धर्म्म-प्रमाणम् ? अथवा किमसाध्यमस्ति दुर्विदग्धस्य काम-हतकस्य ? कुतः ?

कामान्महेन्द्रो गुरुदारगामी पद्मासनो दीव्यति देहजायाम् ।
प्रज्ञा च मानश्च मनोबलञ्च प्रलीयते सर्वमिदं स्मरेण ॥

तथापि न निश्चयं गन्तुमर्हामि । दमयन्त्याः पूर्ववृत्तान्तेन सर्व-मेवेदं विसंष्ठुलं प्रतिभाति ! भवतु यावदन्तं प्रेक्षे । अहो प्रभावः पर्णसंख्यानविद्यायाः ! तथाहि यावदेव प्रियसुहृदा ऋतुपर्णेन मयि समादिष्टा पर्णसंख्यानविद्या, तावदेव यथा कलिर्मे शरीरादपक्रान्तस्तथा कर्कोटकस्य प्रियबन्धोः प्रभा-वाच्च मलिनं रूपमपि मे अपसृतं समुदितञ्च पुनरेव पूर्वरूपं शारीरमौज्ज्वल्यम् । यत् सत्यं नैतेन परितुष्यामि, कुतः ?

गृहीतुकामा पतिमन्यमात्मना विलोकमाना बत मां नृपात्मजा ।
लज्जाभरात् साध्वसिनी तपस्विनी न जातु शक्ता भविता स्वयंवरे ॥

अथवा श्मश्रुसम्भारसंवृतवदनो नैव प्रत्यभिज्ञास्ये । तथापि स्वयंवरणकृत्यसमाप्तिं यावत् कुत्रापि निभृते प्रदेशे रहस्य-मवस्थास्ये । अहह, अशक्यमिदमिदानीं नलेन! भगवन् भूतनाथ, दीनस्य मे दीयतामात्मसम्धारणसामर्थ्यम् । अहो मामाश्रिता सुचिरं परिखिन्ना दमयन्ती यथा कथमपि सुखं वर्त्तताम् । (तूष्णीं स्थितः)

(नेपथ्ये)—भो भो गुल्मस्थानाधिकृताः! अप्रमत्ताः स्वेषु स्वेषु स्थानेषु भवत ।—

रथ्या पौरविवर्जिता विलसतु प्राप्नोतु दिव्यां श्रियं
रेणूत्पातनिवारणाय परितो गन्धाम्बुभिः सिच्यताम् ।
दिव्यस्रक्परिणद्धतोरणतटं सन्दीप्यतां कुण्डिनम्
एषा राजसुता स्वयंवरमहे यात्यम्बिकामर्च्चितुम् ॥

नलः—(श्रुत्वा) अहह, किमेतत् ?

श्रवणे प्रविशति वज्रं हृदये शूलं समुत्क्षिप्तम् ।
जीर्णारण्यं पृथिवी सर्वं जगती विपर्य्यस्तम् ॥

हा हा दुःसहवेदनासम्पर्कादनीशोऽस्मि आत्मानं धारयितुम्!

पतत्यन्धे ध्वान्ते सपदि हृदयं दुःखविषमं
नवाघातस्पर्शात् पुनरपि नवीनं क्षतमभूत् ।
विलुप्तं सामर्थ्यं प्रसरति महामोहतिमिरं
क्व गच्छेयं कं वा शरणमनुयायां स्थितिकृते ॥

अहह! एषा दमयन्ती स्वयंवरणशोभासम्भृता—

संस्मृत्य काननभवं चिरदुःखभारं
मां दुर्गतं शनकैरेव जुगुप्समाना ।
आशाशतप्रचितमन्तरमाहरन्ती
यात्यम्बिकासदनमद्य विलासलास्यैः ॥

एवमेकदा दमयन्ती ममापि कृते सोल्लासा जाता, एवमेकदा

दमयन्ती ममैव कथां स्मरन्ती जगदिदं सुखाकरं सम्भावितवती, एवमेकदा दमयन्ती ममैव संकल्पेन संसारं विस्मृतवती ! अहो ! तत्सर्वमिदानीं स्वप्नानुभूत इव प्रपञ्चो मिथ्येव संवृत्तम् । हा हतोऽस्मि मन्दभाग्यः !

( नेपथ्ये )—भो भो अम्बिकासदनाधिकृता ! भगवन्तो भूमिदेवाः ! एषा नृपदुहिता दमयन्ती स्वाभीष्टसिद्धिकामा अम्बिकासदनमागता, तदवधानेन तिष्ठन्तु भवन्तः, यथेयं—

गन्धानुलेपनसमुच्चितपुष्पभारैः
मालूरपत्रपरिशोभिजाप्रसूनैः ।
पूजां यथाविधि विधातुमिहाम्बिकायाः
शक्ता भवेदपि निजाभिमतार्थलाभे ॥

नलः—मूढ़ नल, किमद्यापि ते श्रोतव्यमवशिष्यते ? एषा दमयन्ती स्वाभिमतवरलाभकाम्यया देवीमर्चयितुम् अम्बिकासदनं प्राप्ता, तत् किमेतदनन्तरमपि जीवन्नेव विलोकयितुमिच्छसि ? दुरन्त भागधेय, वितीर्णं लोकातिशायिफलं नैषधस्य । किमतः परमवशिष्यते ? मिलितप्राया स्वयंवरपरिषत् । कियदनन्तरमेव दमयन्ती सभायामुपगता—(अर्द्धोक्ते) अहह, नातःपरं चिन्ता प्रसरति ।

स्खलति गगनाद् भास्वान् व्यस्ताः समस्तनभोग्रहाः
तिमिरमचिरात् प्रादुर्भूतं धरापरिवेष्टनम् ।
विलसति न वा तेजोलेशः हता जगतां मुदः
ज्वलति शिरसो ग्रन्थिस्तीव्रं विघूर्णति विग्रहः ॥

हा हतोऽस्मि, हा मुषितोऽस्मि, हा अशरणोऽस्मि । ( इति स्थितः )

( नेपथ्ये ) अज्जा ! पलित्ताअध पलित्ताअध !

नलः—( सहसोत्थाय ) अये किमेतत् ?

( नेपथ्ये )—अज्जाङ्गपलित्ताअध पलित्ताअध कुमालो इन्दसेणो ।

नलः—कुतः परित्रातव्यः ?

( नेपथ्ये )—तस्स बालअसुलहं लत्तपलिच्छदं पेक्खिअ कुपिदादो सहिसादो ।

नलः—( ससम्भ्रमं ) अये कुमार इन्द्रसेन इति नलहतकस्य कुल-प्रतिष्ठा, कुतः खल्वायुधम् ? अथवा अलं महिषवित्रासनार्थं नलस्य आयुधेन ।

( पुनर्नेपथ्ये )—हा हा ! एसो दुस्सिवालो अदिमित्तं पच्चासस्रो, ता सिग्घं पलित्ताअध ।

नलः—अभयम् अभयं कुमारस्य, एष नलस्तस्य परित्राता ।

[ निष्क्रान्तः ] ।

प्रविश्य विदूषकः—अहो मन्दारकस्य निपुणवेदित्वम् ! यदेव मनसा कल्पितं, तदेव समुपनतं, कुमारम् इन्द्रसेनं पुरुषेण सह क्रीड़ोद्याने विहरन्तमुपलभ्य प्रियवयस्यं तत्र प्रापयितुं मयैव दुरन्तः सैरिभः प्रयुक्तः, तन्नूनं दृष्टातिसामर्थ्यं इन्द्रसेन एव तं निवारयिष्यति, परम् अनुषङ्गतः पितापुत्रयोः सुसम्बन्धः सम्भविता । भवतु, वयस्य, अद्य सम्भ्रमादात्मानं समुद्घाटित-वानसि, अद्य सफलाः सर्वे परिश्रमाः मन्दारकस्य ! वयस्य, कियच्चिरं वञ्चितोऽस्मि ते सौहार्दपरिष्वङ्गात् । भवतु इदानीं क्रीड़ोद्यानं गत्वा विनीतविषादो भवामि ।

[ निष्क्रान्तः ] ।

( ततः प्रविशति पुरुषेणानुगम्यमान इन्द्रसेनः नलस्य तं करे गृह्णन् )

इन्द्रसेनः—आर्य्य, किमत्र विस्मयं वहसि ? क्षत्रियकुलाङ्कुरोऽहम् अधिगतधनुर्वेदः, सैरिभः इति लघ्वीयं मात्रा । मम हि—

नलो वीराग्रणीस्तातो वीरसेनः पितामहः।
भीमो मातामहो भीमः स्वयं शास्त्रे गुरुर्वरः॥

नलः—वत्स, ललितं जल्पसि, अथ पृच्छामि कुतस्त्योऽयं वीराग्रणीः नलो नाम, यं तातत्वेन व्यपदिशसि ?

पुरुषः—अम्मो ! कुमालस्स तादं नलं ज्जेव एसो ण आणादि ? ता कोदिसो एसो ?

इन्द्रसेनः—आर्य्य, मम तातं नलमिव नावधारयसि ? यद्येवं श्रूयतां तस्य मम त्रिलोकैकवीरस्य तातस्य—

क्रोधाद्धनुर्ध्वनिविघूर्णितवातचक्रं
दृष्ट्वा त्रसन्ति सुरवैरिगणा विवर्णाः।
संसारभङ्गमवधार्य्य भयेन धाता
सोत्कण्ठतामिव समाश्रयते प्रकामम्॥

अपिच— यत्पुण्यकीर्त्तिपरिपाकवशात् पृथिव्यां
नामापि पापसुहृदामभवद् विलुप्तम्।
गायन्ति वासवसभासदने विनीता
विद्याधराः सपदि यस्य गुणोपचारान्॥

नलः—किमेवं कुमारो निषधेषु पुरा विश्रुताधिकारमाक्षिपति ?

इन्द्रसेन—अथ किम्,त्रिलोकविश्रुतपराक्रमं निषधराजमेव स्मरामि !

नलः—आम् ! एष ते तथाभूतस्तातः ?

इन्द्रसेनः—कथमिव ?

नलः—आम् ! एष तु विज्ञात एव।

इन्द्रसेनः—आः ! किमेवमज्ञाततत्त्वोऽपि विज्ञानाभिमानिताम् आत्मनः प्रदर्शयसि ? धिक् शान्तम् !

नलः—कुमार ! कथमज्ञाततत्त्वो भवामि ?

इन्द्रसेनः—अन्यथा कथं तातस्य नलस्यापि कीर्त्तिमभूतामिव मन्यसे ? ननमविदित एव ते मदीयस्तातः !

नलः—कुमार, अलमत्र क्रोधेन, मया स एव नलो विज्ञायते, येन द्यूतव्यसनविनिर्जितेन राज्यं परित्यज्य कान्तारमाश्रित्य बुद्धिदोषादात्मनो निःसहाया धर्म्मपत्नी विसर्जिता, तद् यदि नायं तातो व्यपदिष्टस्तदा को वात्र मे मत्सरः ?

इन्द्रसेनः—किमेवं प्रलपसि ? स एव मे तातस्त्रिभुवनविख्यातकीर्त्तिः। यच्च तस्य दोषमुपक्षिपसि, तत्र तु कारणं नानुसन्धत्से ?

नलः—कीदृशं कारणं तत्र श्रीमता समुपलब्धम् ?

इन्द्रसेनः—कलिनिग्रहस्तत्र कारणम्।

नलः—अथ स्वयमेव पितुः कलिना निग्रहं शंसन् अस्य त्रिलोकविश्रुतं वीर्य्यं किं न मलिनयसि ?

इन्द्रसेनः—धिक् प्रहसनम्! भद्र, अलमुत्तरोत्तरेण, यथागतं प्रतिनिवर्त्तस्व, किमेवं नलात्मजं मामिन्द्रसेनं समुद्दीपयसि ?

नलः—अये! कुपित एव मे वत्सः परिलक्ष्यते, तथाहि—

भ्रूभङ्गकुटिला दृष्टिः क्रोधविस्फुरितोऽधरः।
दृढं सव्येन हस्तेन धनुरंसस्थमग्रहीत्॥

पुरुषः—अम्मो! कुविदो विअ लक्खीअदि कुमालो! ता को ण क्खु एसो कुमालस्स उव्वेअं उप्पादेदि ?

नलः—कुमार, वृथैव समुद्दीप्तो भवसि।

इन्द्रसेनः—कथं वृथैव ? गुरुपरीवादश्रवणमतिहीनस्यापि समुद्दीप्तिहेतुर्भवति, तदहं मन्ये नाधीतं भवता गुरुगृहेषु।

नलः—कुमार, अपि गुरुणा केवलमेतदेव शिक्षितोऽसि, यथा गुरुजननिन्दा न श्रोतव्येति, नत्वेतदपि यथा दोषा वाच्या गुरोरपीति।

इन्द्र—( सरोषं ) भद्र, मा तावत्, अलं दोषलेशेनापि सुतस्य मे तातस्य दोषानुसन्धानापराधेन, यदि इतः परमपि मामुद्वेजयसि, तदा नूनमतिक्रान्तमर्य्यादो भवामि।

नलः—( कृतकं कोपं प्रदर्श्य ) पितृविक्रमविस्मित, प्रगल्भ, अति हि नाम प्रगल्भसे, अपि तव निदेशेनैव ते पितरं मृषा गौरवभाजं करिष्ये, अहो, शैशवशैलो !

इन्द्र—अनभिज्ञातचारित्र, संयम्यतामात्मनो रसना, अन्यथा—

वाचज्ज्योतिर्ज्वालया दीप्रमस्त्वं जिह्वागर्वं संविधाता लघुं ते।
लोको द्रष्टा दुष्टदण्डप्रकारं पापोत्सेकादस्तु लोके निवृत्तिः॥

नलः—डिम्भक,

वाचा शक्यं वक्तुमेवं जनानां कृत्यारम्भे दुष्करं कृत्यमेतत्।
स्नेहात्तावत् सह्यतामेव नीतं बालोऽसि त्वं बालवाचं दधीथाः॥

इन्द्र—किं नु ? इन्द्रसेनं मां परिहससि ? अनभिजात, दुर्मर्याद, अनभिज्ञातनलप्रभाव, एषोऽहं त्वां—

शुभ्रांशुवंशप्रभवः प्रतापो नलस्य देहादुपजातजन्मा।
त्वद्गर्वविध्वंसकरोऽद्य भूत्वा प्रत्याययिष्ये निजवंशकीर्त्तिम्॥

तदेहि यावदायुधमुपादाय समरक्षमां भूमिमवतराव:।

नलः—(स्वगतम्) अये, सुतरामुन्मत्ततेजा इन्द्रसेनो लक्ष्यते। (आकाशे दृष्टिं बद्ध्वा ) भगवति, राज्यलक्ष्मि, सनाथासि नूनमेतेन भाविना नरपतिना। तदिदानीं कथं व्यवहरेयम् ?

इन्द्र—भद्र, अपि भयमुपगतम् ?

नलः—कस्मात् ?

इन्द्र—आयुधव्यापारात्।

नलः—धिक् शान्तं ! शैशवमुग्ध, अलमुत्तरोत्तरेण एहि समरक्षमां भूमिमेव अवतराव:।

इन्द्र—भवत्वेवं तावत्। (उभौ परिक्रामतः)। अये इयं सा दृश्यते समरक्षमा भूमिः, तदत्र प्रविश्य पौरुषपरीक्षा प्रवर्त्यताम्।

नलः—एवं क्रियताम्।

[ निष्क्रान्तौ ]

पुरुषः—अम्मो ! सच्चं ज्जेव जुज्झव्वावारं कादुं पउत्तो कुमालो

पड़िवक्खस्स एक्कं कम्मुअं देदि, हद्धो ! हद्धो ! एसो पुलिसो कुमालं उद्दिसिअ कम्मु अगुणए सलं आलोवेदि, कुमालो बि तह ज्जेव कलेदि, एसो दोसं ज्जेव साहिणिवेसो समलो पउत्तो ! ( दृष्ट्वा ) अले किस्स क्ख् एद, पउत्तमत्तो ज्जेव णिउत्तो समलब्बावालो ! किस्स क्खु एदं ! ( निपुणं दृष्ट्वा ) आं एसो अह्माणं लाआ भोमो लाअदालिआए अज्जेण मन्दालएण बुड्ढ जअन्धलेण अ अणुगदो जुज्झब्बावालं णिवा- लेदि, ता पच्चुज्जोविदह्मि । [ निष्क्रान्तः ]

( ततः प्रविशति भीमादिसहितो नलः )

भीमः—वत्स, नल, अलं दुःखानुषङ्गेण, सर्वमेव तत्त्वतो गृहीत- मस्माभिः, अत्र नास्ति ते पुरुषदोषः, परं दैवमेव अत्र अपरा- ध्यति। दैवमप्रतिविधेयमिति को वा न जानाति ?

नलः—अहो प्रत्युज्जोवितोऽस्मि, यदि मे गुरवः कठोरकृत्येऽपि मयि प्रसादमवलम्बन्ते ।

भीमः—वत्स, नल, एष प्रचार्य्यमाणः स्वयंवरवृत्तान्तोऽपि तवैव लाभाय दमयन्त्या समुद्भावितः,तदत्र भार्य्यामन्यथा मा मंस्थाः,

नलः—( स्वगतम् ) अहो जानाम्येव सुनिपुणा देवीति, तदद्य देव्या- मपनीतो मे मानसदोषप्रसूतो विकल्पपर्य्यायः । तदियं क्षमापणार्हा देवी, कुतः ?

सा साधुशीला मम पुण्यलब्धा प्रतिक्षणं ध्यायति सङ्गतिं मे ।
मूढो ह्यहं तामसतीं विचिन्वन् अहो महापातकदोषमाप्तः ॥

भीमः—वत्स, नल, कियच्चिरादनन्तरं सम्प्राप्तो भवान्, तदियं तप- स्विनी सुचिरं लब्धदेव्या अभिनन्द्यतां सम्भाषणेन सपुत्रा दमयन्ती, एषोऽहम् अचिरात् प्रियसुहृदम् ऋतुपर्णं समा- नीय तेन साकमेव त्वत्सङ्गतिमहोत्सवं सम्भावयामि, जय- न्धर, त्वमपि गच्छ सभास्थानं, तत्र गत्वा विज्ञापय सविनयं

समवेतान् पारिषदान्, यथाहमनुपदमेव तेषां सम्भावनार्थ-मुपगच्छामीति। [ निष्क्रान्तः ]

कञ्चुकी—यथाज्ञापयति महाराजः। [ निष्क्रान्तः ]

दम—आर्य्यपुत्र, नूनं विस्मितोऽसि, यदद्यापि कथं जीवामीति ?

नलः—शान्तं पापं प्रतिहतममङ्गलं देव्याः ?ः देवि,—

इन्द्र—तात, कथमेतावच्चिरमस्मान् परिहाय स्थितोऽसि, अपि न स्मृतिपथमागता कदापि ते अस्माकं चिन्ता ?

नलः—वत्स, किमेवं पृच्छसि ? प्रकृतिदुर्ललित,

राज्यं विहाय घनकाननभूप्रयाणे
नाभूत्तथा किमपि दुःखमसह्यरूपम्।
यावत्त्वदीयवदनाम्बुजहास्यरेखा-
सम्पर्कविच्युतिवशाद् विषमं तदासीत्॥

वत्स, एहि इदानीं परिष्वङ्गेण विनोदय माम्!

दम—वत्स, परिष्वजस्व तातं, तथा परिष्वजस्व यथा पुनरपक्रमितुं न शक्नुयात्।

इन्द्र—( परिष्वज्य ) तात, न पुनरपक्रमितुं समर्थोऽसि ?

नलः—प्रिये दमयन्ति, वत्स इन्द्रसेन, नाद्यापि नलस्तथाभूतो वर्त्तते, यथा पुनरपक्रान्तः स्यात्, तत् परिहीयतां मनोमालिन्यम्।

दम—आर्य्यपुत्र, तैरेव मनोमालिन्यं न परिहीयते, येषां दृष्टिगोचरतां न गतोऽसि। तत्तव प्रदर्शनाय सुसज्जीकृतमपि एकपद एव परिहृतं दमयन्त्या।

नलः—प्रत्युज्जीवितोऽस्मि। ( विदूषकमुपसृत्य ) वयस्य, मन्दारक, एहि दृढं परिष्वजस्व मां, कियच्चिरादनन्तरं निराबाधं भवन्तं परिष्वजे। ( परिष्वजते )।

विदू—अनुगृहीतोऽस्मि यदेतावता कालेन एकान्तवर्त्ती जनोऽयं स्मृत इति।

नलः—वयस्य, सुचिरात् परं भवतः सर्वानुपलभ्य कृत्यविमूढो जातोऽस्मि। तदेहि वयस्य पुनरपि गाढं परिष्वजस्व मां—

वह्नोः कालादद्य प्रणयपरिणाहव्यवसितं
परिष्वङ्गस्त्वङ्गे विलसतु विषादव्यथयिता।
अहो दूरे दूरे चिरमधमदैवानुसरणात्
स्थितं यावच्छीघ्रं हृदयमिह संयातु हृदयम्॥

[ उभौ परिष्वङ्गं नाटयतः ]

विदू—वयस्य, आनन्देन सुतरां मुग्धोऽस्मि, तत् किं गायामि, किं हसामि, किं वा नृत्यामि, इत्येतदेव निर्णेतुं नालमस्मि।

नलः—वयस्य, मन्दारक, प्रिये दमयन्ति, निर्घृणो नलहतकः लज्जमानोऽपि किञ्चित् प्रष्टुमिच्छति।

उभौ—किमिव तत् ?

नलः—नलहतकेन विजने वने विसर्जनादनन्तरं केन दमयन्ती विदर्भान् प्रापितेति ?

विदू—वयस्य, श्रूयतां, अहमेव कथयामि—यदा भवानर्द्धवासो दधानां प्रियसखीं दमयन्तीं परिहाय दूरं गतवान्, तदा निद्रोत्थिता सा समन्ततः शून्यं वीक्षमाणा प्रमुक्तकण्ठं रोदितुं प्रवृत्ता, इतस्ततो वने सोन्मादं परिभ्रमन्ती कातरपरिदेवनेन वनदेवतानामपि नयनाश्रूणि पातयन्तीव स्थिता, अथ सा विलपन्ती काननान्तरे भीषणभुजङ्गेन विनाश्यमाना त्वामुच्चैः प्रव्हापयन्ती यावदेव नोपलब्धवती, तावदेव मोहविलुप्तसत्त्वा भूमौ पतिता विमूढ़करणग्रामा सा स्पन्दशून्या गतासुरिव संवृत्ता—

नलः—ततस्ततः ?

विदू—ततश्च यावदेव स भीषणभोगं विस्तार्य भुजङ्गो दमयन्तीशिरसि दंशनाय सज्जीकृतवान् आत्मानं, तावदेव कुतोऽपि प्रत्यागत्य

किरात एको दैवानुकूल्येन भुजङ्गं शरगोचरीकृत्य प्रियसखी-मनुगृहीतवान् ।

नलः—अहो प्रत्यागतजीवितोऽस्मि, ततस्ततः ?

विदू—ततश्च तेन किरातेन दमयन्तीललितलावण्यमुग्धेन पञ्चशर-शरवित्रस्तेन तथैव मुग्धं स्वसहचरं विरोधिनं लतापाशेन संयम्य क्रमेण समुपहृता प्रियसखी दमयन्ती, सापि तपस्विनी गत्यन्तरमनीक्षमाणा लब्धसंज्ञा प्रमुक्तकण्ठं परित्राणं याच-माना समन्ततः स्खलन्ती अपि न तेन परिहृता ।

नलः—( सावेगं ) किं नाम मयि स्थिते ममैव धर्मपत्नीं दमयन्ती-माक्रामन्ति किराताः, कः कोऽत्र शीघ्रं मे सज्यं धनुरुपनय यावदेषोऽहम्—

विस्फारितोदरभयङ्करचापयन्त्र-
क्षिप्तेन भीषणशरेण किरातकीटम् ।
सम्प्रेषयामि नरके कृमिलक्षपूर्णे
रे दुष्ट तिष्ठ पलकेन ददामि दण्डम् ॥ [ गन्तुमीहते ]

दम—( नलं करे धृत्वा ) आर्यपुत्र, किमेवं मुग्धो भवसि, वृत्तं खलु एतत्, एषाहं समीप एव ध्रिये ।

नलः—( दृष्ट्वा सलज्जं ) आं एवं ! मया पुनरतिमात्रविक्षेपात् वर्त्त-मानमिव तदवधृतम् । अहो मे वीर्यप्रकर्षः ! अहं हि—

दस्यौ गृहं दर्पवशात् प्रविश्य स्वशक्तिमुद्घोष्य धनानि हृत्वा ।
निःशङ्कमात्मीयगृहं प्रपन्ने गृहस्थमत्रानुहरामि दृप्तम् ॥

वयस्य, ततस्ततः ?

विदू—ततश्च प्रियसख्या दमयन्त्या भक्तिगृहीतेन भूतभावनेन समनु-प्रेषित इव पतिव्रताधर्मेण समादिष्ट इव मुक्तिनाथो नाम किरातराजः केनापि स्वानुचरेण निवेदितवृत्तान्तस्तत्र तदा-नीम् एव प्रतिगतो धर्मपुत्रीति सम्बोधनेन विदर्भनन्दिनीम् आश्वास्य दुष्टवृत्तयोः किरातयोः प्राणान्तकं दण्डमाज्ञापितवान् ।

नलः—अहो न्यायदर्शिता किरातराजस्य! अहो दौर्भाग्यञ्च दुष्टवृत्तस्य किरातद्वयस्य ?

विदू—मा तावदनयोरनुशोच्यतां दौर्भाग्यम् ।

नलः—कथमिव ?

विदू—यतः खलु अयं समादिष्टः प्राणान्तको दण्डस्ताभ्यामतिक्रान्तः ।

नलः—किं पलायनेन आत्मा रक्षितः ?

विदू—कथमेवं प्रभाविणः किरातराजस्याधिकारे सम्भवेत् ।

नलः—तत् कथमन्यथा ?

विदू—ममैव प्रियसख्या कृपया तयोः कातरवाक्यविमनायितया सम्प्रार्थितस्य किरातराजस्य प्राणान्तकदण्डप्रत्याहारेण ?

नलः—अहो दयालुता देव्याः !

आत्मत्राणं याचमाना यदन्ते जाता देवी निष्फलप्रार्थनादौ ।
तत्प्राणार्थं प्रार्थितो यत् किरातः सत्यं तस्या मार्दवं तत्र हेतुः ॥

ततस्ततः ?

विदू—ततः कियत्कालानन्तरमेव बहुभिः किरातैरनुसृतेन तेन किरातपतिना प्रियसखी मे विदर्भान् प्रापिता इति ।

नलः—प्रिये ! दिष्ट्या वर्द्धसे, यदेष जात्या किरातोऽपि तथा साधुवृत्तं दधानो देव्या अनुकूलतया लब्धः ।

दम—सर्वमेवेदं प्रभावविलसितं त्वदेकचरणसेवायाः !

इन्द्र—तात, किरात इति भीमा जातिरियं, तत्रापि एवं माहात्म्यम् ?

नलः—वत्स, न जानीषे, गुणप्रकर्षे जातिरिति नोपयुज्यते, पश्य,

न केवलं जातिकृता महात्मता
यन्नीचजातेरपि तस्य साधुता ।

सनातनो गोपकुले समुन्नतो
ददाह लोकस्य दुरन्तदुर्गतिम् ॥

अथ वयस्य, क्व साम्प्रतमसौ मे अकारणबान्धवः किरातराजः ?

विदू—स हि महात्मा तत्रभवता विदर्भाधीश्वरेण याचितः सुतरां राजपरिजनैः सत्क्रियमाणोऽद्यापि अस्यामेव नगर्य्यां प्रतिवसति ।

नलः—अहो सुसमीच्यकारी तत्रभवान् भीमः, येन महोपकारमनुष्ठितवतः किरातस्य नीचजातिमभिसन्धाय तं वाङ्मात्रसत्कारेण न विसर्जितवान् इति ।

दम—आर्य्यपुत्र, को वा विस्मयस्तावन्मात्रेण, पित्रा तत्र परं प्रियसुहृद्वृत्तिरनुगृहीता ।

नलः—युक्तमेव समीहितं महाराजस्य ।

इन्द्र—तात, स मे द्वितीयो वृद्धमातामहः । मयि तस्य स्वस्मिन् इव दौहित्रे परमः स्नेहः

नलः—देवि, दमयन्ति, वयस्य मन्दारक, नूनं ममाप्येष महाराजो भीम इव मानं लम्भयितव्यः ।

दम—अनुगृहीतास्मि ।

विदू—एवमेव युज्यते, यतः तेन प्रियसखी मे धर्म्मपुत्रीति व्यपदिष्टा तयाप्येष धर्म्मतात इति ।

प्रविश्य कञ्चुकी—महाभाग, महाराजो भीमः समाज्ञापयति यथा सकलराजन्ययक्षगन्धर्वादिसमक्षं सभायां सपुत्रकलत्रमित्रस्य भवतो दर्शनमिच्छामीति, तत्रभवता अयोध्याधिपतिना ऋतुपर्णेनापि भवान् एवं सन्दिष्टः ।

नलः—वयस्य, किमिदम् ?

विदू—नासमीच्यकारी तत्रभवान् भीमः । तद्यथादिष्टमनुष्ठीयताम् ।

नलः—जयन्धर, विज्ञापय एषोऽहमनुपदमादेशं पालयामीति ।

कञ्चुकी—यथाज्ञापयति महाभागः। [ निष्क्रान्तः ]

नलः—देवि, महाराजस्य सभायामस्मदुपस्थापने कीदृशं निमित्तं सम्भावयसि ?

दम—राजवृत्तं राजान एव कल्पयितुमर्हन्ति। तदिदं विदर्भाधिपतेर्वृत्तं निषधाधीश्वराणामिव कल्पनाविषयः।

नलः—( दीर्घं निश्वस्य ) देवि, अतीतं विस्मरसि, अद्य पुष्करो राजेश्वरो निषधेषु।

दम—( दीर्घं निश्वस्य ) आं एवं,

नलः—अथ वयस्य, त्वं तत्र कीदृशं निमित्तं सम्भावयसि ?

विदू— अहं ? ( विचिन्त्य ) अहं पुनः सम्भावयामि, यथा समुपस्थिता भोजनवेलेति महोत्सवानुभवार्थं सर्वैः सम्भूय अत्र भोक्तव्यम् इति।

सर्वे—( हसन्ति )।

नलः—भवतु यथा तथा वा, "आज्ञा गुरूणां ह्यविचारणीया" इति। तदेहि तत्रैव गच्छामः। [ परिक्रम्य ] अये इयमसौ विदर्भसभा, यत्र हि—

एते राजन्यवर्गाः सुरसमितिरियं नागलोकस्तथायं
गन्धर्वाः किन्नराश्च प्रविततरुचयः सिद्धसाध्यादिकाश्च।
सर्वे योग्यासनस्थाः स्थिरमतिगहनाः शोभमानाः पुरस्तात्
अन्योन्यस्पर्द्धिरूपद्रविणपरिकराद् विस्मयं संश्रयन्ते॥

अपि च

सिंहासनं परिजहद् गुरुरेष भीम
आयोध्यिकक्षितिभृतानुसृतः सभायाम्।
सम्मानपूर्णवचनैरनुनीय सर्वान्
गर्व्वं विहाय निजगौरवमातनोति॥

भवतु यावदत्र प्रविशामि। [ परिक्रामन्ति ]

( ततः प्रविशन्ति विदर्भसभायां भीमः ऋतुपर्णः
अन्ये च विदेशागता राजादयः )

भीमः—नानादिग्देशागता राजानो देवप्रभृतयश्च ! कृतकृत्याः किल विदर्भा यदेवमत्रभवन्तः सम्मिलिताः, तत् किमपरं कृतज्ञता-मन्तरेण विदर्भप्रतिनिधिरद्य विज्ञापयतु, कुतः ?

येषां दर्शनमुत्तमेन तपसा लभ्यं सुराणां जनैः
गन्धर्व्वाः स्वरसञ्चयस्थितिविदो ये स्वर्गसिद्धाश्चिरं
ये यक्षा धननायकस्य विषये ये चापरेऽप्युत्तमाः
ते सर्व्वे परमेण पुण्यमहसा भीमेन लब्धाः पुरः ॥

सर्व्वे—अलमलमत्यादरेण, धन्यः खलु महाराजो भीमः।

भीमः—अयि भोः पारिषदाः ! भवतां प्रीतिरेव तथा मां प्रत्याययति। यद्भवतु तद्भवतु, अहमत्र किञ्चित् प्रवक्तुमिच्छामि।

सर्वे—निराबाधं प्रस्तूयताम्।

भीमः—अस्त्येव विदितो भवद्भिः सुविश्रुतयशा निषधेश्वरो मदीय-जामाता ?

सर्व्वे—अथ किम्, को वा तं महात्मानं न जानाति ?

भीमः—अस्त्येतदपि विदितं महाभागानां यदेष प्रतिकूलदैववशात् राज्यपरिभ्रष्टः कानने प्रस्थितः स्वीयां धर्म्मपत्नीं निःसहायां विसर्ज्य क्वापि गत इति ?

सर्व्वे—सर्वं जानीमः, तदपि जानीमो यथेयं पुनर्विदर्भान् परिप्राप्तेति।

भीमः—सेयं मे दुहिता दमयन्ती कुतोऽपि प्रच्छन्नस्वरूपं पतिं पुनः प्राप्तकामा व्याजेन पुनः स्वयंवरणमुद्घोषितवती।

राजानः—( परस्परं मुखमवलोकयन्ति ) अये किमिदम् ?

ऋतुपर्णः—सत्कुलप्रसूताः, प्रभूतबलवाहना राजानः ! भाग्यवशात् अयोध्याजानपदानां तावत्कालं सार्व्वभौमो नलः पुण्यबहु-

लायामयोध्यायां स्थित्वा मयैव साकमत्र प्राप्तः, तदिदानीं अनुमन्यतामस्य धर्म्मदारसमागमः !

सर्वे—अये सार्वभौमो नलः पुनः प्राप्तः, प्रियं नः प्रियं नः ।

ऋतुपर्णः—तदेष तत्रभवान् उत्तीर्णकलिप्रभावः पुनरधिगतभूरितेजाः सार्वभौमो नलः स्वपुत्रकलत्रमित्रसहित इत एव अभिवर्त्तते, य एष—

संस्मृत्य धर्म्मवनितापरिहारदोषं
लज्जाभरेण मलिनाननमितोत्तमाङ्गः ।
धृत्वा करेण निजमात्मजमिन्द्रसेनं
प्राप्तो महाव्यसनमुक्त इवांशुमाली ॥

सर्वे—अयि एष सार्वभौमो नलः प्राप्तः, प्रियं नः प्रियं नः ।

( ततः प्रविशति यथानिर्दिष्टो नलः )

ऋतुपर्णः—( दमयन्तीं दृष्ट्वा ) अहो पतिव्रताया वत्साया दमयन्त्याः समवस्था ! इयं हि—

उत्कण्ठाविवशा वियोगवशतो दीनां दशामाश्रिता
भूषाच्छेदविनीतमूर्त्तिरनघा मन्दक्रमा लज्जया ।
एकामिव विलम्बितामनुपदं वेणीं दधाना सती
धारासिक्तविशीर्णपुष्पवलया वल्लीव संलक्ष्यते ॥

नलः—[ स्वगतम् ] लज्जितोऽस्मि विदितनिजापराधो यथापूर्वं निःसङ्कोचमुपगन्तुम्, अथवा का गतिः ? [ परिक्रामति ] किं वा मन्यते परिषत् ?

सर्वे—विजयतां विजयतां कलिप्रभावमुक्तः सार्वभौमो नलः ।

नलः—अहो प्रत्युज्जीवितोऽस्मि, यत् सर्व्वैरेव देवदोषो विज्ञातः, तत् पुरुषदोषान्मुक्तोऽस्मि ।

सर्व्वे—अहो पतिव्रतायाः प्रभावः ! अहो नलस्य धर्म्ममहिमा

नलः—(उपसृत्य) तात, अभिवादये, ( ऋतुपर्णमुपसृत्य ) महाराज, अभिवादये, वञ्चनाकृतम् अपराधं मे क्षन्तुमर्हति महाराजः।

ऋतुपर्णः—महाराज, नल, अलमभ्यर्थनया। गुरवः स्निग्धेषु गुणमात्रदर्शिनो भवन्ति, अपि च विज्ञातमिदमस्माभिः,—यत्

कलेरेव प्रभावेण सर्व्वमाचरितं त्वया।
प्रदोषे पद्मसङ्कोचः किं पद्मस्यापराधतः?

अत्र भवानेव क्षमापणीय ऋतुपर्णेन।

नलः—कथमिव?

ऋतुपर्णः—वत्स, नल, अत्रापि वक्तव्यमेव? तथाहि—

सामन्तलक्षमुकुटानि पदोपकण्ठे
यस्य प्रसादलवलाभकृते नमन्ति।
तस्यैव सूतपदवीप्रतिपादनेन
प्राप्तापराधमधुना स्वमनुस्मरामि॥

नलः—महाराज, किमेवं मामपराधिनं करोषि, त्वमेव मे समाश्रयस्तदानीं निरालम्बस्य!

इन्द्र—तर्हि एतावत्कालं वृद्धमातामह एव पितुर्मे प्रच्छादकः।

नलः—वत्स, न केवलं प्रच्छादकः, परं जीविकाप्रदानेन जीवनदातापि

दम—आं अन्यथैव शिशोरिन्द्रसेनस्य वचनं गृहीतमार्य्यपुत्रेण!

इन्द्र—आम् एवम्?

ऋतुपर्णः—वत्से, दमयन्ति, वत्सनलेन परवुद्धया महती कृतज्ञता प्रसूयते, त्वमपीदानीं तथा कुरुष्व, मन्ये इतःपरं तव परिपालनेन प्रियसुहृद् भीमोऽपि युवाभ्यामभिनन्दनीयः?

दम—( सलज्जम् ) काहमबला शुभाशुभनिर्णये।

नलः—अहो विशेषेण अधिक्षिप्तोऽस्मि। (प्रकाशम्) महाराज,

(अर्द्धोक्ते) तात, पुत्रचापलं चन्तुमर्हसि, न तावत् किञ्चि-
दभिसन्धाय मया उक्तम्।

ऋतुपर्णः—तदेहि गाढ़परिष्वङ्गेन दृढ़न्ते धारयामि। (परिष्वजते)

भीमः—भोः भोः पारिषदाः! एष सार्व्वभौमो नलः पुनरपि
सौभाग्यवशात् परिप्राप्तो वसुन्धरया, तदत्रैव विदर्भराज-
सिंहासने वैदर्भीसहितस्य तस्य साम्राज्याभिषेकं कर्त्तु-
मिच्छामि, तदिदमनुमन्यताम्।

सर्व्वे—विजयतां विजयतां सार्व्वभौमो नलः। प्रियं नः प्रियम्।

विदूषकः—( प्रहर्षं नाटयति )।

भीमः—वयस्य, ऋतुपर्ण, अत्र न कोऽपि प्रतिपच्चः, तदनुभूयता-
मस्माभिरिदानीमभिषेकमहोत्सवः?

विदू—मन्दारक, अपि सुधासागरे पतितोऽसि, यदेवं मुहुरपरिमितं
सुधाप्रवाहं पिबन् अवशतामात्मनः प्रतिपद्यसे, मूर्ख, एष
ते नृत्यगीतयोरवसरः, उत्तिष्ठ, उत्तिष्ठ। ( हर्षं नाटयति )

नलः—तात,—

भीमः ऋतुपर्णश्च—वत्स, कथ्यतां किमिव विवचणीयम्, अलं
शङ्कया।

नलः—तात, अत्र अहमेव प्रतिपच्चः—

दम—अये, सुष्ठु हृदयमार्य्यपुत्रस्य।

सर्वे—( सविस्मयाः शृखन्ति )। कथमिव? कथमिव?

भीमः ऋतुपर्णश्च—वत्स, किमभिसन्धत्से?

नलः—आर्य्याः, साम्राज्यमिदं द्यूतविनिर्जितं पुष्करस्य मम भ्रातुः,
तदत्र स एव प्रभुः प्रदाने, कथमहमात्मना परस्वमपहरेयम्,
अत एवाहं प्रतिपच्चः।

सर्वे—नहि नहि सार्वभौमो नल एवास्मासु प्रभवति, न वयं पुष्करस्य
अधिकारम् अनुमन्यामहे।

नलः—(उपसृत्य) तात, अभिवादये, ( ऋतुपर्णमुपसृत्य ) महाराज, अभिवादये, वञ्चनाकृतम् अपराधं मे क्षन्तुमर्हति महाराजः ।

ऋतुपर्णः—महाराज, नल, अलमभ्यर्थनया । गुरवः स्निग्धेषु गुणमात्र-दर्शिनो भवन्ति, अपि च विज्ञातमिदमस्माभिः,—यत्

कलेरेव प्रभावेण सर्व्वमाचरितं त्वया ।
प्रदोषे पद्मसङ्कोचः किं पद्मस्यापराधतः ?

अत्र भवानेव क्षमापणीय ऋतुपर्णेन ।

नलः—कथमिव ?

ऋतुपर्णः—वत्स, नल, अत्रापि वक्तव्यमेव ? तथाहि—

सामन्तलक्षमुकुटानि पदोपकण्ठे
यस्य प्रसादलवलाभकृते नमन्ति ।
तस्यैव सूतपदवीप्रतिपादनेन
प्राप्तापराधमधुना स्वमनुस्मरामि ॥

नलः—महाराज, किमेवं मामपराधिनं करोषि, त्वमेव मे समाश्रयस्तदानीं निरालम्बस्य !

इन्द्र—तर्हि एतावत्कालं वृद्धमातामह एव पितुर्मे प्रच्छादकः ।

नलः—वत्स, न केवलं प्रच्छादकः, परं जीविकाप्रदानेन जीवनदातापि

दम—आं अन्यथैव शिशोरिन्द्रसेनस्य वचनं गृहीतमार्य्यपुत्रेण !

इन्द्र—आम् एवम् ?

ऋतुपर्णः—वत्से, दमयन्ति, वत्सनलेन परबुद्ध्या महती कृतज्ञता प्रसूयते, त्वमपीदानीं तथा कुरुष्व, मन्ये इतःपरं तव परिपालनेन प्रियसुहृद् भीमोऽपि युवाभ्यामभिनन्दनीयः ?

दम—( सलज्जम् ) काहमबला शुभाशुभनिर्णये ।

नलः—अहो विशेषेण अधिक्षिप्तोऽस्मि । (प्रकाशम्) महाराज,

(अर्द्धोक्ते) तात, पुत्रचापलं क्षन्तुमर्हसि, न तावत् किञ्चि-दभिसन्धाय मया उक्तम्।

ऋतुपर्णः—तदेहि गाढ़परिष्वङ्गेन दृढन्ते धारयामि। (परिष्वजते)

भीमः—भोः भोः पारिषदाः! एष सार्व्वभौमो नलः पुनरपि सौभाग्यवशात् परिप्राप्तो वसुन्धरया, तदत्रैव विदर्भराज-सिंहासने वैदर्भीसहितस्य तस्य साम्राज्याभिषेकं कर्त्तु-मिच्छामि, तदिदमनुमन्यताम्।

सर्व्वे—विजयतां विजयतां सार्व्वभौमो नलः। प्रियं नः प्रियम्।

विदूषकः—( प्रहर्षं नाटयति )।

भीमः—वयस्य, ऋतुपर्ण, अत्र न कोऽपि प्रतिपक्षः, तदनुभूयता-मस्माभिरिदानीमभिषेकमहोत्सवः?

विदू—मन्दारक, अपि सुधासागरे पतितोऽसि, यदेवं मुहुरपरिमितं सुधाप्रवाहं पिबन् अवशतामात्मनः प्रतिपद्यसे, मूर्ख, एष ते नृत्यगीतयोरवसरः, उत्तिष्ठ, उत्तिष्ठ। ( हर्षं नाटयति )

नलः—तात,—

भीमः ऋतुपर्णश्च—वत्स, कथ्यतां किमिव विवक्षणीयम्, अलं शङ्कया।

नलः—तात, अत्र अहमेव प्रतिपक्षः—

दम—अयि, सुष्ठु हृदयमार्य्यपुत्रस्य।

सर्वे—( सविस्मयाः शृखन्ति )। कथमिव? कथमिव?

भीमः ऋतुपर्णश्च—वत्स, किमभिसन्धत्से?

नलः—आर्य्याः, साम्राज्यमिदं द्यूतविनिर्जितं पुष्करस्य मम भ्रातुः, तदत्र स एव प्रभुः प्रदाने, कथमहमात्मना परस्वमपहरेयम्, अत एवाहं प्रतिपक्षः।

सर्वे—नहि नहि सार्वभौमो नल एवास्मासु प्रभवति, न वयं पुष्करस्य अधिकारम् अनुमन्यामहे।

विदू—वयस्य, किमिवं प्रलपसि ? द्यूतच्छलेन पुष्करो राज्यं परिगृहीतवान्, अस्यापि ग्रहणे दोषं शङ्कसे ?

नलः—वयस्य, सूक्ष्मपर्य्यायं धर्मं न जानासि, एवं सति राजधर्म्मो विपन्नः स्यात् !

विदू—राधधर्म्मं भवद्विधा राजान एव जानन्ति, कोऽहम् आधुनब्राह्मणस्तस्य निश्चये ? [ सासूयमिव परावर्त्तते ]

सर्वे—[विस्मयं रूपयित्वा ] अहो धर्म्मनिष्ठता नलस्य ! अन्यथा॰को वा सति सामर्थ्ये स्वकीयसाम्राज्यग्रहणे प्रतिपन्नतामाचरेत् ?

इन्द्र—तात, अथ यदि साम्राज्यमिदं पितृव्यस्य, तर्हि अस्माकमेव !

नलः—वत्स एवमिदम् ।

भीमः—ऋतुपर्णस्य—अहो शैशवौदार्य्यम् !

प्रविश्य पुरुषः—महालाअ, एसो को वि अणदिप्पकिट्ट-पलिच्छअपलिहिदो भद्दपुलिसो पलिहालभूमिए उपट्ठिदो, ता दाणिं महालाओ प्पमाणं ।

नलः—अथ केनैतेन भवितव्यम् ? अथवा नूनमयं विमुक्तमोहतिमिरो भ्राता मे पुष्करो भविष्यति ! तात, नूनमयं भ्राता मे पुष्करः प्राप्तो भवेत्, तदादिश्यतामस्य सभाप्रवेशः ।

भीमः—तथा—( वक्तुमुपक्रमते ) ।

विदू—महाराज, मा तावदस्मिन् उत्सवसमये दुर्जना द्रष्टव्याः ।

नलः—वयस्य, नहि पुष्करं मे लेशतोऽपि दूषयितुमर्हसि, यतः सर्वमिदमतीतं वस्तु कलिप्रभावपराभूतेनैव विहितमिति । अद्य तु तमन्यथैव द्रक्ष्यसि ।

विदू—द्रक्ष्यामीति यत् सत्यं, किन्तु न तस्य भावान्तरं, परं तवैव दौर्भाग्यात् दुरन्तमवस्थान्तरम् । [ कोपं नाटयति ]

नलः—वयस्य, मा शङ्किष्ठाः ।

विदू—किमयमपि गूढ़ो राजधर्म्म एव, यदत्रापि न वयं किञ्चन जानीम इति ?

नलः—वयस्य, कोपं मा कार्षीः, प्रवेश्यतां पुष्करः !

विदू—यद्येवं तदेष मन्दारको नात्र स्थास्यति । एकदा द्यूतवृत्तेन विवेकप्रसूतेन साम्राज्यसुखमुपभुक्तम्, अद्य पुनरनेन विधिना विवेकप्रसूतेन तथैव भुज्यतां, कथमत्र ब्राह्मणो वैरी भवामि ? [ गन्तुमिच्छति ]

प्रविश्य सहसा कलिः—बन्धुप्रिय मन्दारक, मा तावदद्यापि पुष्करे विकल्पं कर्त्तुमर्हसि । कुतः ?

यं यं विधिं व्यधित पुष्कर एष पूर्वं
द्यूतच्छलेन हि नलस्य कठोरकष्टम् ।
सर्व्वः स एव मम योजनया प्रवृत्तः
मध्यस्थतामिह गतोऽस्मि स चान्यवृत्तः ॥

तदेष सस्नेहमनुगृह्यताम् । महाराज नल, पुनः प्राप्तोऽसि तमेव पुष्करं, यस्ते शैशवादौ प्राणतुलितः प्रियो भ्रातासीत् । एषोऽहं कलिः स्वयमुपदिशामि गृह्यतामनेन पुष्करेण अनुपदमभ्यर्थितः पुनरेव वसुन्धरासाम्राज्यम् । वत्से दमयन्ति, सुबहु क्लेशितासि काननादौ कलिहतकेन तदिदानीं पति व्रताकुलरत्नं त्वां क्षमापयितुमिच्छामि ।

दम—( स्वगतम् ) आं एवमेव तदानीमार्य्यपुत्रेणोक्तं, श्रुतञ्च स्वयमेव काननान्तरे अस्यैव तर्जनवचनम् । भवत्वेवं तावत् । (प्रकाशम्) भगवन् अभिवादये, अलमतिवादेन मन्दभाग्याया अपराधमुत्पाद्य ।

कलिः—महाराज भीम, सम्प्रति दिष्ट्या वर्द्धसे सपुत्रकलत्रजामातृसमागमेन, तदादिश्यतां पुष्करप्रवेशः, एषोऽहं गच्छामि ।

[ निष्क्रान्तः ]

विदू—अरे ! एष स कलिः पुनरपि दर्शनगोचरं गतः, तदेनं दण्ड-काष्ठेन हन्मि यावदन्यस्य निग्रहो न स्यात् । ( दण्डकाष्ठ-मुद्यम्य ) अरे ! अचिरमेव निष्क्रान्तः ? भवतु यदि कदाचिदन्तरं लभेय, तदानीमेव योग्यं दण्डं धारयिष्यामि । अथ पश्यामि किमुद्दिश्य पुष्करः प्राप्त इति ।

भीमः—भद्र, गच्छ, प्रवेश्यतां सत्वरमेष पुरुषः ।

पुरुषः—तह ( निष्क्रम्य पुनः पुष्करेण सह प्रविश्य ) इदो इदो महाभाओ, [ उपसृत्य ] एसो महाराओ सव्वेहिं पलिवुदो इध ज्जेव चिट्ठदि ता उपसप्प णं ।

पुष्करः—कुतो मे वत्स इन्द्रसेनः, कुतो मे आर्य्या दमयन्ती ? ( नलं दृष्ट्वा ) अये, अयमार्य्यः ! अयमार्य्यः ! पुष्करहतक, दिष्ट्या वर्द्धसे । ( नलस्य पादयोर्निपत्य ) आर्य्य, आर्य्य, अपि सत्यमेव पुनः प्राप्तोऽसि ?

सर्व्वे—( विस्मयं रूपयन्ति ) ।

नलः—वत्स, उत्तिष्ठ उत्तिष्ठ, एष समुत्तीर्णकलिप्रसूतनिग्रहः सत्यमेव प्राप्तोऽस्मि ।

पुष्करः—आर्य्य, धार्य्यतां विरूपकारिणो मे योग्यतमो दण्डः, अन्यथा नोत्तिष्ठामि ।

विदू—( सासूयमिव ) महाराज पुष्कर, अभिजानासि निपुणो नट इव सुरसमभिनेतुम्, तत् विस्पष्टं कथय कीदृशोऽभिसन्धिरिति ?

पुष्करः—आर्य्य मन्दारक, किमेवं क्षते क्षारं प्रक्षिपसि ? श्रूयतामिदानीं पुष्करहतकस्य हृदयावस्था । तथाहि—

राजसिंहासनं त्यक्तं भोगास्त्यक्ता विषोपमाः ।
परितो दग्धशोषैव विचिनोमि जलाशयम् ॥

विदू—( स्वगतम् ) अथ सत्यमेव विगतदुष्टवृत्तः पुष्करः ? ( सचिन्तः स्थितः )

नलः—वयस्य मन्दारक, विदितकलिवृत्तान्तोऽपि किमिति पुष्करं दूषयसि ? कुतः ?

मेघावृतो दिनपतिर्जगतो विकाशं
यन्नादधाति किमु तत्र स एव वाच्यः ?
आवेष्टिता भवति भूमिरमानिशायां
ध्वान्तेन चन्द्रकिरणेन च पौर्णमास्याम् ॥

तत्परिहीयतां पुष्करे कोपधारा। वत्स पुष्कर, उत्तिष्ठ उत्तिष्ठ, अलमद्यापि चरणपातेन, प्रसन्नोऽस्मि ।

पुष्करः—अगृहीतदण्डः पातकी नोत्तिष्ठामि ।

नलः—यद्येवम् उत्थीयताम्, एष वितीर्य्यते दण्डः ।

पुष्करः—अनुगृहीतोऽस्मि, कथ्यताम् ।

दम—अये, किमिदम्, अनपराधस्यापि आर्य्यपुत्रो दण्डं धारयेत् ?

सर्व्वे—अथ कीदृशो दण्डः स्यात् ?

नलः—वत्स पुष्कर, एहि—

प्रभूतस्नेहदिग्धेन हृदयेन बलीयसा ।
तव गात्रपरिष्वङ्गो योग्यदण्डो वितीर्य्यते ॥ [आलिङ्गति]

पुष्करः—अहो सुतरामनुगृहीतोऽस्मि । ( स्वगतम् ) अये एवं गुण-मन्तरेण कथं सर्व्वैव वसुन्धरा आर्य्यस्य कृते परितप्ता भवेत् ? ( प्रकाशं ) आर्य्य सुतरां दण्डितोऽस्मि ।

सर्व्वे—अहो दण्डस्य माधुर्य्यं ! कठोरता च !

पुष्करः—( दमयन्तीमुपेत्य ) आर्य्ये, विस्मृतपूर्व्ववृत्तो विरूपकारिणं मां क्षन्तुमर्हसि । ( पादयोः पतति )

दम—वत्स पुष्कर, अपि अविदितवृत्तस्त्वं दमयन्त्या ? तदुत्तिष्ठ, सर्व्वं मया सुचिरात् प्रागेव क्षान्तम् ।

पुष्करः—अहो प्रत्युज्जीवितोऽस्मि। ( इन्द्रसेनमङ्के कृत्वा) वत्स, अपि स्मरसि माम् ?

इन्द्रसेनः—कथं न स्मरामि, परं वयमेव विस्मृतास्तातेन।

पुष्करः—( स्वगतं ) अहो शिशुना निपुणमधिक्षिप्तोऽस्मि। (प्रकाशम्) वत्स, अलं वैमनस्येन, इतः प्रभृति चिराय स्मरिष्यामि।

इन्द्र—प्रियं नः, प्रियं नः।

पुष्करः—आर्य्य, सम्प्रति कुमारमिन्द्रसेनं यौवराज्ये अभिषिच्य साम्राज्यपरिग्रहेण अनुगृह्यन्तां प्रजाः परिजनाश्च, अस्य परममहोत्सवस्य सैव प्रतिष्ठा।

नलः—वत्स पुष्कर, अद्यापि महोत्सवस्य पूर्णतां नानुभवामि।

पुष्करः—कथमिव ?

नलः—यतोऽस्मिन् सर्व्वजनसमवाये न तं पश्यामि येन मे प्रिया—

वने प्रतिभयाकीर्णे किरातशतसेविते।
काम्यमाना किरातेन सहसोपेत्य रक्षिता॥

पुष्करः—( स्वगतम् ) अहो पुष्करहतकस्य कृत्यमहिमा! दुष्ट पुष्कर, एतदपि सोच्छ्वासमाकर्णयसि ? धिङ्मूर्ख, अपध्वस्तोऽसि।

दम—वत्स पुष्कर, सर्वमिदं दैवविलसितम्! तत् किमेवं विमनायसे ?

पुष्करः—अथ क्वासौ क्वासौ महात्मा ? येन जात्या किरातेनापि देवचारित्रमनुकृतम् ?

भीमः—वत्स, तस्य देवचारित्रेण समाकृष्टोऽहमस्यामेव नगर्य्यां तद्दर्शनदिनात् प्रभृति ससम्मानं वासमकल्पयम्।

पुष्करः—प्रियं नः प्रियं, तदिदानीं तस्यैव महात्मनो दर्शनावसरः।

नलः—एवमिदम्।

दम—अहो इदानीमपगतो मे हृदयभार इति मन्ये; अथवा युक्तदर्शी एव आर्य्यपुत्रः!

भीमः—एवं युज्यते। कः कोऽत्र?

प्रविश्य पुरुषः—आज्ञापयतु महाराजः।

भीमः—आदिश्यतां जयन्धरः, यथा राजभवनस्य अनतिदूरे प्रासादे गत्वा किरातराजं सम्भावयेति।

इन्द्र—मातामह, अलमत्र परिक्लेशेन, अहमेव गत्वा वृद्धमातामहं समानयामि। [ द्रुतं निष्क्रान्तः ]

भीमः—त्वमपि कुमारमनुवर्त्तस्व।

पुरुषः—तह। [ निष्क्रान्तः ]

भीमः—सुतरामनुरक्तः खलु कुमार इन्द्रसेनः किरातराजे।

ऋतुपर्णः—को वा महात्मनि नानुरज्यति।

(ततः प्रविशति हस्ते किरातराजमाकर्षन् इन्द्रसेनः)

इन्द्र—एहि वृद्धमातामह, एहि यावन्मम तातं नलं द्रक्ष्यसि?

किरातराजः—वच्छ, मा चवलत्तणं कलेहि, तुह तादो क्खु लाआ अहं उण क्लिलादो!

इन्द्र—किं तेन?

कि-राजः—अह्माणं खु अवसलोवसप्पलोआ लाआणो हेन्ति।

नलः—( श्रुत्वा ) अये, एष स महात्मा? अथवा कः सन्देहः? तथाहि—

सुरम्यविस्तीर्णललाटपट्टकः श्रुत्यन्तविश्रान्तसरोजलोचनः।
सुकुञ्चितालम्बितकेशगुच्छको न जातु दोषस्य पदं भवेदयम्॥

इन्द्र—तात, मातामह, पितृव्य, एष मे वृद्धमातामहः।

कि-राजः—आं एसो सो मह धम्मपुत्तिआए पदी सव्वपुहवीए लाआ णलो, ता सुट्ठु जुज्जदि।

दम—तात, प्रणमामि। ( प्रणमति )

कि-राज—वच्छ, किं णु क्खु कलेसि? तुमं लाआए दुहिदा धम्मभज्जा अ, ता किं मं किलादं अज्ज बि पणमेसि?

नलः—आर्य्य मा मैवं, किरात इत्येतदेव न ते लाघवकारम्, कुतः ?

पङ्कादुत्पद्य पद्मं शुभसुरभिवशादुत्तमाङ्गे सुराणाम्,
सेनानीः कार्त्तिकेयः शरविपिनजनिः सर्वदेवैकमान्यः।
चण्डालं रामभद्रो गुहकमनुगतं मित्रतामैव निन्ये,
तस्माज्जात्या किरातः प्रकृतिगुरुतया भूय एवासि वन्द्यः॥

सर्व्वे। अथ किम्, अथ किम्।

नलः—आर्य्य, दमयन्त्या त्वं धर्मतस्तात इति व्यपदिष्टोऽसि, तत् ममापि महाराज भीम इव माननीय एव, तद् गृह्यताम् अयं प्रणतिपर्य्यायः। वत्स पुष्कर, अभिवादय अत्रभवन्तं महात्मानम्।

पुष्करः—आर्य्य, कान्तारे अस्मत्कुलवधूरक्षणात् परमात्मीयोऽसि, तदेष प्रणामपर्य्यायः।

कि-राजः—वच्छआ, किं एत्थ पच्चुत्तलं त्ति ण क्खु ओधालेमि, तहवि एव्वं कधेमि जधा तुम्हाणं सव्वधा सुहं होदु, जइ दाणिं मह हिअअं कधेदि, तह ज्जेव तुम्हाणं सुहं देवा करेन्तु त्ति।

नलप्रभृतयः—अनुगृहीताः स्म।

नलः—एह्येहि।

अकारणाविष्कृतबन्धुकृत्यस्त्वं मे विधात्रा परिकल्पितोऽसि।
तदद्य मामेत्य परिष्वजस्व महात्मसङ्गात् सुकृतं वहेयम्॥

कि-राजः—कदत्था णं किलादजादी।

नलः—मा मैवम्—

किरातजातिस्तव जन्मपूता का नूतना तत्र कृतार्थतास्माम्।
स्वर्णद्रवे वह्निवितीर्णकान्तौ कान्तिः परा नास्ति पुनर्विदाहात्॥

पुष्करः—आर्य्य, तदिदानीमवसरः साम्राज्याभिषेकस्य ?

नलः—अथ किम्, एवमधुना प्राप्तम्।

पुष्करः—(भीममुपसृत्य) महाराज, अनुमन्यतां कर्त्तव्यम्।

भीमः—एवमिदानीमेव प्रवर्त्तताम्।

पुष्करः—आर्य्य, उपसर्पतु सिंहासनम्, आर्य्ये, त्वमपि सव्यस्था भव, वत्स इन्द्रसेन, अम्बाया अङ्कमाश्रयस्व ।

इन्द्र—त्वं नोपगन्तासि ?

पुष्करः—अथ किम् एषोऽहं युष्मान् वीजयिष्यामि ।

इन्द्र—अथ नाद्य आतपबाधा वर्त्तते, तत् कथमेवम् ?

पुष्करः—तथापि यदि मातुरङ्कमाश्रयतः स्वेदबाधा स्यात् (हसति) ।

सर्व्वे—( हसन्ति )

( नलः दमयन्ती पुष्करः इन्द्रसेनश्च सिंहासनमुपसृत्य यथानिर्द्देशमवस्थिताः )

सर्व्वे—विजयतां विजयतां महाराजः सपुत्रकलत्रो नलः ।

नलः—वयस्य मन्दारक, इत एहि यावदद्य पुनः सिंहासनमधिरुह्य राजा संवृत्तो भवन्तं प्रियवयस्यं गाढ़ं परिष्वजे ।

विदू—(द्रुतं गत्वा) वयस्य, वयस्य, एतावता कालेन पूर्णो मे मनोरथः । ( गाढ़ं परिष्वज्य ) सखि दमयन्ति, अपि इदानीं निर्वृतासि ?

दम—सर्व्वमिदं भवतां प्रसादादनुभूयते ।

विदू—अनुकूलकारिणो दैवादिति वक्तव्यम् ।

नलः—को वा सन्देहः, तथापि भवतां पुरुषकारस्तत्र सहकारी । ( भीमं दृष्ट्वा ) तात, कालोचितं किञ्चिद् वक्तुमिच्छामि ।

भीमः—महाराज, आदिश्यताम् ।

नलः—धिक् व्रीड़ितोऽस्मि । यथापूर्वं वत्सेत्येव मे युक्तमामन्त्रणम् ।

भीमः—भवतु, वत्स, उच्यताम् ।

नल—अहमद्य दमयन्त्याः परित्रातारं किरातपतिं सर्व्वकिरातेषु अधिपतिं कर्त्तुमिच्छामि, किं वा वत्सः पुष्करो मन्यते ?

पुष्करः—आर्य्य, अत्रापि किमन्यथा मन्तव्यमस्ति ?

नलः—अपरञ्च ।

भीमः। उच्यताम्।

पुष्करः—आदिश्यताम्।

नलः—एष मे प्रियबन्धुर्मन्दारकः सुचिरात् प्रभृति राजकुले बद्ध-सौहृदो राजकुलमङ्गलार्थं स्वजीवनमपि तृणाय मन्यते, तदस्मै निषधसीमान्ते राज्यमतिसृज्यताम्।

पुष्करः—यथाज्ञापयत्यार्य्यः।

विदू—वयस्य, अपि इतःपरं नायमन्तिकचरो भविष्यति? वयस्य, अलं मे राज्येन, अहं तवैव प्रासादे सुचिरमिन्द्रसेनमुपलालयन् वर्त्तिष्ये।

नल—वयस्य, मा मैवम्, दूरस्थोऽपि भवान् सुचिरमेव मत्समीपे वर्त्तिष्यसे, तदेवमस्तु।

विदू—का गतिः?

(ततः प्रविशति विवेकेनानुसृतो धर्म्मः)

धर्म्मः—वत्स विवेक, पश्य, एष महाराजो नलः प्रियभार्य्यया दमयन्त्या इन्द्रसेनेन च सुतेन सिंहासनमधितिष्ठति, एष च पुष्करस्तं वीजयति।

विवेकः—देव, स एव इदानीं पुष्करस्तथा संवृत्तः? अथवा किं नाम दुष्करं त्वया प्रदीप्तप्रभावेण।

धर्म्मः—तदेहि यावदुपसर्पावः। (उपसरतः)

उभौ—विजयतां विजयतां महाराजः पुण्यश्लोको नलः।

नलः—अये क एष सानुचरः प्राप्तः?

सर्व्वे—(पश्यन्ति)।

धर्म्मः—महाराज, नल एष धर्म्मोऽस्मि, एष च मदनुचरो विवेको नाम। कलिपरिहारात् परं यथावसरं प्राप्तौ स्वः।

सर्व्वे—अये एष भगवान् सविवेको धर्म्मः? (उत्तिष्ठन्ति)

धर्म्मः—महाराज नल, धर्म्मतेजसा विजयसे, वत्से दमयन्ति, पाति-

व्रतपरायणा एव सर्व्वासां विपदां पारं गतासि। महाराज, भीम, असामान्यगुणाया दुहितुः समुत्पत्त्या पवित्रः सर्वं एवान्ववायस्ते। महाराज ऋतुपर्ण, धन्यो भवान् यदेष पुण्यश्लोको निषधेश्वरः सुचिरं कालं भवन्तमाश्रित्य स्थितवान्, तदनेन ते पुण्यप्रचयेन शाश्वतन्ते लोकं कल्पयेयम्।

सर्वे—अनुगृहीताः स्मः।

धर्म्मः—सद्वृत्त किरातराज, सर्वतस्त्वमेवात्र प्रशस्यतमः, यदेवं हीन-वंशप्रसूतिरपि देवसदृशं सद्वृत्तमाश्रितोऽसि। तदेषोऽहं परिणामन्ते विशदं करिष्ये।

कि-राजः—अणुगृहीदोम्हि।

धर्म्मः—वत्स मन्दारक, सुचिरं नलमनुवर्त्तमानः प्रशस्तोऽसि, तत्त-वापि अन्ते शुभा गतिरुत्पत्स्यते।

विदू—अनुगृहीतोऽस्मि।

धर्म्मः—वत्स पुष्कर, कलिप्रभावेण सर्वमनिष्टमाचरितमिति विज्ञातेऽपि नापैति निःशेषन्ते मनोमालिन्यं, तदद्य प्रभृति मनः-प्रसादन्ते समादिशामि।

पुष्करः—अनुगृहीतोऽस्मि।

धर्म्मः—वत्स इन्द्रसेन, पितेव धर्म्मवृत्तेन पराक्रान्तो दीर्घजीवनं लभेथाः।

नलादयः—अनुगृहीताः स्मः।

धर्म्मः—वत्स नल, कथ्यतां किमपरमवशिष्यते कर्त्तव्यम्, कुतः ?

कान्तारे रक्षिता भैमी दावाग्नेस्त्वं सुरक्षितः।
कर्कोटकस्य नागस्य विषज्वालापि वारिता॥

वत्से पतिव्रते दमयन्ति, कथय किं तवापि देयमवशिष्यते ?

प्राप्तराज्योऽद्य भर्त्ता त्वां स्वयं विन्दति निर्म्मलाम्।
सर्वदुःखविमुक्तासि प्रमोदे परमे स्थिता॥

क्रूरः कलिः परिभवं सुतरामुपेतः
कीर्त्तिः सुनिर्म्मलतमा प्रसृता पृथिव्याम् ।
देवादयः सपदि सम्मुखतो भवन्ति
यन्नान्यलभ्यमिह वां तदुपैति काले ॥

दम—पर्य्याप्तमिदमेव, किंवा परमवशिष्यताम् ?

नलः—यद्यपि पर्य्याप्तमिदमेव, तथापि भगवत्प्रसादादिदमस्तु—

पर्जन्यः कालवर्षाद्धरणिमनुदिनं शस्यपूर्णां विधेयात्
राजानः सन्तु नित्यं प्रकृतिहितकृते पुण्यकृत्ये निमग्नाः ।
पापं विध्वंसमार्गं व्रजतु कविकुलं काम्यलाभं विधत्तां
प्रेम्णां शुद्धिः समृद्धा भवतु विलसताद्भारते स्वर्गशोभा ॥

[ निष्क्रान्ताः सर्वे ]

सप्तमाङ्कः समाप्तः

---

समुद्रयुग्मानलचन्द्रमाने वङ्गीयवर्षे मिथुनस्थसूरे ।
गुरोर्दिने सप्तदशे समाप्तिम् प्राप्तं नवीनं नलवृत्तनाट्यम् ॥

शिवमस्तु

# संस्कृतसाहित्यपरिषद्ग्रन्थमाला

| | मूल्यम् साधारणानाम् | सदस्यानाम् |
|---|---|---|
| कालीतन्त्रम्—सटीकानुवादम् | ॥৵० | ॥० |
| शङ्करीसङ्गीतम्—शङ्करीविषयकं गीतगोविन्दानुकरण-काव्यम् | ।৵० | ।० |
| मुक्तिवादः—गदाधरभट्टाचार्य्यविरचितः टीकाद्वय-भाषानुवादसहितः | २) | १॥० |
| দুর্গোৎসবতত্ত্বম্—রঘুনন্দনভট্টাচার্য্যকৃতম্ শারদীয়দুর্গোৎসবপ্রমাণপ্রয়োগতত্ত্বরূপম্ | ১।০ | ১৲ |
| पितृदयिता—अनिरुद्धभट्टकृता सामवेदीय-सन्ध्याश्राद्धादिपद्धतिरूपा | १।० | १) |
| দুর্গোৎসবনিবন্ধকদম্বম্—দুর্গোৎসব-বিবেকাদিগ্রন্থপঞ্চকাত্মকম্ | ॥० | ।৵০ |
| कारकोल्लासः—भरतमल्लिककृतः सोदा-हरणकारकनिर्णयरूपः | ৵० | ৵० |
| ऋग्वेदभाष्योपक्रमणिका—सायणकृता आङ्गलभाषाटिप्पणसमेता | ॥।० | ।৵० |
| গ্রহযাগতত্ত্বম্—রঘুনন্দনভট্টাচার্য্যকৃতম্ | ।৵০ | ।৵০ |
| प्रभाकरविजयः—नन्दीश्वरविरचितः प्रभाकरसम्प्रदायानुसारि-मीमांसाग्रन्थः। | १।० | १) |
| তীর্থতত্ত্বম্—রঘুনন্দনভট্টাচার্য্যবিরচিতম্। | ।৵০ | ।৵০ |
| पवनदूतम्—टिप्पनीपाठान्तरादिभिः समलङ्कृतम्। धोयीकवि-कृतम्। | ॥।० | ।৵० |
| नलदमयन्तीयम् ( नाटकम् )—परिषदाचार्य्य--श्रीकालीपद तर्काचार्य्यकृतम्। | १।० | १) |

मुद्राप्यमाणग्रन्थाः:—

आनन्दलतिका—सपत्नीक-कृष्णनाथविरचितं काव्यम्।

याघातत्त्वम्—रघुनन्दनभट्टाचार्य्यविरचितम्।

मुद्रापणार्थं गृहीता ग्रन्थाः:—

छान्दोग्यमन्त्रभाष्यम्—सायणपूर्व्ववर्त्तिगुणविष्णुकृतम्।

ऋग्वेदप्रातिशाख्यम्--शौनककृतम्।

प्रमेय[illegible] ...कृता गौड़ीयवैष्णवदर्शन-

म[illegible] ...:।

स[illegible] ...मणिकृता ब्रह्मसूत्रवृत्तिः।

